भूशङ्कुघातः प्रभया विभक्तः
प्रजायते दीपशिखौच्च्यमेवम् ॥
त्रैराशिकेनैव यदेतदुक्तं
व्याप्तं स्वभेदैर्हरिणेव विश्वम् ॥

उदाहरणम् ।

शङ्कोर्भार्कमिताङ्गुलस्य सुमते! दृष्टा किलाष्टाङ्गुला छायाग्राभिमुखे करद्वयमिते न्यस्तस्य दैपे पुनः। तस्यैवार्कमिताङ्गुला यदि तदा छायाप्रदीपान्तरं दीपौच्च्यञ्च कियद्वद व्यवहृतिं छायाभिधां वेत्सि चेत् ॥

न्यासः

ई $\frac{१}{२}$

दीपोच्छ्रितिः

शङ्कुः $\frac{१}{२}$

शङ्कुः $\frac{१}{२}$

भूः $\frac{१३}{२}$ छा $\frac{१}{२}$ भूः २ छा $\frac{१}{२}$

अत्र छायाग्रयोरन्तरमङ्गुलात्मकम् । ५२ । छाये च । ८ । १२ । अनयोरन्तरम् । ८ । इयमनेन । ५२ । गुणिता । ४१७ । छायाप्रमाणान्तरेण । ४ । भक्ता लब्धं भूमानम् । १०४ । इदं प्रथमच्छायाग्रदीपतलयोरन्तरमित्यर्थः । एवं द्वितीयच्छायाग्रमानम् ।१५६। भूशङ्कुघातः प्रभया विभक्त इति जातमुभयतोऽपि दीपौच्च्यं

सममेव हस्ताः ६ $\frac{१}{२}$ ।

एवमित्यत्र छायाव्यवहारे त्रैराशिककल्पनया गमनं वर्त्तते तद्यथा । प्रथमच्छायातो द्वितीयच्छाया । १२ । यावताधिका तावता छायावयवेन यदि छायाग्रान्तरतुल्याभूर्लभ्यते तदा छायया किमिति एवं पृथक् पृथक् छायाप्रदीपतलान्तरप्रमाणं लभ्यते । ततो द्वितीयं त्रैराशिकं यदि छायातुल्ये भुजे शङ्कुः कोटिस्तदा भूतुल्ये भुजे किमिति लब्धं दीपकौच्च्यमुभयतोऽपि तुल्यमेव । एवं पञ्चराशिकादिकमखिलं त्रैराशिककल्पनयैव सिद्धं यथा भगवता श्रीनारायणेन जननमरणक्लेशापहारिणा निखिलजगज्जननैकबीजेन सकलभुवनभावनेन गिरिसरित्सुरनरासुरादिभिः स्वभेदैरिदं जगद्व्याप्तं तथेदमखिलं गणितजातं त्रैराशिकेन व्याप्तं यद्येवं तद्बहुभिः किमित्याशङ्क्याह ।

यत्किञ्चिद्गुणभागहारविधिना बीजेऽत्र वा गण्यते

तत् त्रैराशिकमेव निर्म्मलधियामेवावगम्यं विदाम् ।

एतद्यद्बहुधास्मदादिजडधीधीवृद्धिबुद्ध्या बुधैस्तद्भेदान् सुगमान् विधाय रचितं प्राज्ञैः प्रकीर्णादिकम् ॥”

इति श्रीभास्कराचार्य्यविरचितायां लीलावत्यां छायाधिकारः समाप्तिमगात् ॥

छायाभृत्, पुं, (छायां छायारूपमृगलाञ्छनं यद्वा छायां शीतलकान्तिं बिभर्त्तीति । भृ + क्विप् ।) चन्द्रः । इति हेमचन्द्रः । २ । १९ ॥

छायामित्रं, क्ली, (छायया छायाकरणेन मित्रमिव छायाया मित्रमिति वा ।) छत्रम् । इति शब्दरत्नावली ॥

छायामृगधरः, पुं, (छाया छायारूप एव मृगस्तं धरतीति । धृ + अच् । छायामृगस्य धरो वा ।) चन्द्रः । इति त्रिकाण्डशेषः ॥

छायासुतः, पुं, (छायायाः सूर्य्यपत्न्याः सुतः पुत्रः ।) शनिः । इति हेमचन्द्रः । २ । ३४ ॥

छिः, पुं, (छ्यति छिनत्ति कीर्त्त्यादिकं नाशयतीत्यर्थः । छो + बाहुलकात् किः ।) गर्हा । इत्येकाक्षरकोषः ॥

छिक्कनी, स्त्री, (छिक् इत्यव्यक्तानुकृतशब्दं करोत्यनया । कृ + करणे अप् ततो ङीष् ।) वृक्षविशेषः । छिक्नी इति नाकछिक्नी इति हाँचोटी इति च भाषा ॥ तत्पर्य्यायः । चवलत् २ तिक्ता ३ छिक्किका ४ घ्राणदुःखदा ५ । अस्या गुणाः । कटुत्वम् । रुच्यत्वम् । तीक्ष्णत्वम् । उष्णत्वम् । वह्निपित्तकारित्वम् । वातरक्तकुष्ठक्रिमिवातकफनाशित्वञ्च । इति भावप्रकाशः ॥

छिक्का, स्त्री, (छिगित्यव्यक्तशब्देन कायतीति । कै + कः । ततष्टाप् ।) क्षुतम् । इति शब्दरत्नावली ॥ छिँक् इति हिन्दी भाषा ॥ (यथा, गारुडे ज्योतिश्चक्रे ६० अध्याये ।
“छिक्कायां लक्षणं वक्ष्ये लभेत् पूर्व्वे महाफलम् ।
आग्नेये शोकसन्तापौ दक्षिणे हानिमाप्नुयात् ॥
नैरृते शोकसन्तापौ मिष्टान्नञ्चैव पश्चिमे ।
अन्नं प्राप्नोति वायव्ये उत्तरे कलहो भवेत् ।
ईशाने मरणं प्रोक्तं प्रोक्तं छिक्काफलाफलम् ॥”)

छिक्किका, स्त्री, (छिक्का क्षुतं साध्यत्वेनास्त्यस्याः । बाहुलकात् ठन् ।) छिक्कनी । इति भावप्रकाशः ॥ [छेदनकर्त्ता ॥

छित्, [द्] त्रि, (छिनत्तीति । छिद् + क्विप् ।)

छितं, त्रि, (छायते स्मेति । छो + क्तः । “शाच्छोरन्यतरस्याम् ।” ७।४।४१ । इतीः ।) छिन्नम् । इत्यमरः । । ३ । १ । १०३ ॥

छित्तिः, पुं, (छिद् + क्तिन् ।) करजद्रुः । इति शब्दचन्द्रिका ॥ छेदश्च ॥

छित्वरः, त्रि, (छिनत्तीति । छिद् + “छित्वरच्छत्वरेति ।” उणां । ३ । १ । इति ष्वरच् प्रत्ययेन निपातनात् साधुः ।) छेदनद्रव्यम् । धूर्त्तः । वैरी । इत्युणादिकोषः ॥

छिद, इर ध ञ औ छेदे । इति कविकल्पद्रुमः ॥ (रुधां-उभं-सकं-अनिट् ।) छेदो द्विधाकरणम् । इर, अच्छिदत् अच्छैत्सीत् । ध ञ, छिनत्ति छिन्ते दात्रेण लतां लोकः । औ, छेत्ता । इति दुर्गादासः ।

छिदकं, क्ली, (छिनत्तीति । छिद् + वुन् ।) वज्रम् । इत्युणादिकोषः ॥

छिदा, स्त्री, (छिद् + “षिद्भिदादिभ्योऽङ् ।” ३ । ४ । १०४ । इत्यङ् ततष्टाप् ।) छेदनम् । इति मुग्धबोधम् ॥

छिदिः, स्त्री, (छिद्यतेऽनया इति । छिद् + “कृगृशॄकुटिभिदिछिदिभ्यश्च ।” उणां । ४ । १४२ । इति इः स च कित् ।) कुठारः । इत्युणादिवृत्तिः ॥

छिदिरः, पुं, (छिनत्त्यनेनेति । छिद् + “इषिमदिमुदिखिदिच्छिदीति ।” उणां । १ । ५१ । इति किरच् ।) करवालः । परशुः । पावकः । रज्जुः । इति मेदिनी । रे, १५५ ॥

छिदुरः, पुं, (छिनत्तीति । छिद् + “विदिभिदिच्छिदेः कुरच् ।” ३।२।१६२ । इति कुरच् ।) छेदनद्रव्यम् । धूर्त्तः । वैरी । इति मेदिनी । रे, १५६ ॥ (स्वयं छिन्ने, त्रि । यथा, रघुः । १६।६२ ।
“संलक्ष्यते न छिदुरोऽपि हारः ॥”)

छिद्र, त च भेदे । इति कविकल्पद्रुमः ॥ (अदन्तचुरां-परं-सकं-सेट् ।) भेद इह द्वैधीकरणम् । छिद्रयति छिद्रापयति भाण्डं बालकः । इति दुर्गादासः ॥

छिद्रं, क्ली, (छिद्यते भिद्यते यत् । छिदिर् छेदने + “स्फायितञ्चिवञ्चीति ।” उणां । २।१३ । इति रक् ।) भेदः । छेँदा इति भाषा । तत्पर्य्यायः । कुहरम् २ शुषिरम् ३ विवरम् ४ बिलम् ५ निर्व्यथनम् ६ रोकम् ७ रन्ध्रम् ८ श्वभ्रम् ९ वपा १० सुषिः ११ । इत्यमरः । १ । ८ । २ ॥ खम् १२ सुषी १३ । इति तट्टीका ॥ (यथा, महाभारते । ३।८२।५३
“ततो गच्छेत धर्म्मज्ञ ! छिद्रमेतत्सुतमर्बुदम् ।
पृथिव्यां यत्र वै छिद्रं पूर्व्वमासीत् युधिष्ठिर ! ॥”)
दूषणम् । इति मेदिनी । रे, ३८ ॥ (यथा महाभारते । २ । १२ । २९ ।
“बहुविघ्नश्च नृपते ! क्रतुरेष स्मृतो महान् ।
छिद्राण्यस्य तु वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसाः ॥”)
अवकाशः । नवमसंख्या । इति ज्योतिषम् ॥ लग्नादष्टमस्थानम् । “छिद्रात्मकमष्टमं स्थानमिति ।” इति ज्योतिस्तत्त्वम् ॥)

छिद्रवैदेही, स्त्री, (छिद्रप्रधाना वैदेही पिप्पली ।) गजपिप्पली । इति राजनिर्घण्टः ॥

छिद्रान्तः, [र्] पुं, (छिद्रमन्तर्मध्ये यस्य ।) नलः । इति राजनिर्घण्टः ॥

छिद्रापलं, क्ली, (छिद्रं दूषणमापलतीति । आ + पल + अच् ।) मायाफलम् । इति राजनिर्घण्टः ॥

छिद्रितः, त्रि, (छिद्र + तः ।) जातच्छिद्रः । तत्पर्य्यायः । वेधितः २ विद्धः ३ । इत्यमरः । ३ । १ । ९९ ॥

छिन्नं, त्रि, (छिद्यते स्म इति । छिद् + क्तः ।) जातच्छेदनम् । छेँड़ा इति काटा इति च भाषा । तत्पर्य्यायः । छातम् २ लूनम् ३ कृत्तम् ४ दातम् ५ दितम् ६ छितम् ७ वृक्णम् ८ । इत्यमरः । ३।१।१०३॥ लूनम् ९ छादितम् १० । इति जटाधरः ॥ छेदितम् ११ खण्डितम् १२ । इति हेमचन्द्रः ॥ (यथा, मार्कण्डेये । ९० । ११ ।

आस्यां निदिशमानां तां ध्यायेद्देवीं विचक्षणः ॥"
ध्यानस्थापनक्रममाह । तन्त्रे ।
"प्रचण्डचण्डिकामेवमध्यात्वा यस्तु पूजयेत् ।
तत्क्षणात्तस्य शिरश्छित्त्वा देवी पिबति शोणितम् ॥"
पिबन्तीमिति तेन सुखेनेति शेषः ।
तथा च ।
"समस्तकं सखर्परं रक्तधाराभिपूरितम् ।
ललज्जिह्वं महाभीमं धृतं वामभुजे तथा ॥"
इति भैरवतन्त्रे ।
तत्रैव ।
"चित्रं कुर्य्याद्दलं पूर्व्वमाग्नेयं रक्तवर्णकम् ।
याम्यं कृष्णमतः पीतं शुक्लं रक्तं सितासितम् ॥
ततः पीतां प्रकुर्व्वीत कर्णिकां तस्य मध्यगाम् ।
तन्मध्ये तु प्रकुर्व्वीत मण्डलं चक्ररोचिषः ॥
रजःसत्त्वतमोरेखा रक्ता शुक्लासिता क्रमात् ।
मायायुग्मं ततो न्यस्य षड्द्वारसमन्वितम् ॥
बाह्ये तस्य च चक्रस्य कुर्य्यात् प्राकारवेष्टितम् ।
पूर्व्वं रक्तं ततः कृष्णं चित्रं पीतं यथाक्रमम् ॥
चतुर्द्वारसमायुक्तं चित्रपालैरधिष्ठितम् ॥"
इत्यस्याः पूजायन्त्रम् ॥ * ॥
यथा वा ।
"त्रिकोणं विन्यसेदादौ तन्मध्ये मण्डलत्रयम् ।
तन्मध्ये विन्यसेद्योनिं द्वारत्रयसमन्विताम् ॥
बहिरष्टदलं पद्मं भूबिम्बत्रितयं पुनः ।
कूर्च्चबीजं त्रिबिम्बाध्यं त्रिकोणे फट् समन्वितम् ॥"
यद्वा [illegible]तन्त्रोक्तं यन्त्रम् ।

"अपरञ्च प्रवक्ष्यामि शृणु देवि ! यथाक्रमम् ।
स्वनाभौ नीरजं ध्यायेद्भानुमण्डलसन्निभम् ॥
योनिचक्रसमायुक्तं गुणत्रितयसंस्थितम् ।
तत्र मध्ये महादेवीं छिन्नमस्तां स्मरेद्यतिः ॥
प्रदीपकलिकाकारामद्वितीयव्यवस्थिताम् ।
योनिमुद्रासमायुक्तां हृदयस्थितलोचनाम् ॥
ध्येयमेतद्यतीनाञ्च गृहस्थानां निशामय ॥"
यथा,—
"अन्तरे स्वशरीरस्य नाभिनीरजसङ्गताम् ।
निर्लेपां निर्गुणां सूक्ष्मां बालचन्द्रसमप्रभाम् ॥
समाधिमात्रगम्याञ्च गुणत्रितयवेष्टिताम् ।
कलातीतां गुणातीतां मुक्तिमात्रप्रदायिनीम् ॥"
एवं ध्यात्वा मानसैः संपूज्य तारिणीवच्छङ्खस्थापनं कुर्य्यात् । ततः पीठपूजा । आधारशक्तये । प्रकृतये । कूर्म्माय । अनन्ताय । पृथिव्यै । क्षीरसमुद्राय । रत्नद्वीपाय । कल्पवृक्षाय । तदधः स्वर्णसिंहासनाय । आनन्दकन्दाय । सम्विन्नालाय । सर्व्वतत्त्वात्मकपद्माय । सं सत्त्वाय । रं रजसे । तं तमसे । आं आत्मने । अं अन्तरात्मने । पं परमात्मने । ह्रीं ज्ञानात्मने नमः । पद्ममध्ये रतिकामाभ्याम् ॥ भैरवमते तु ।
"आधारशक्तिं कूर्म्मञ्च नागराजमतःपरम् ।
पद्मनालञ्च पद्मञ्च पूजयेत्क्रमविन्नरः ॥
मण्डलं चतुरश्च रजः सत्त्वं तमस्तथा ।
रतिकामौ च संपूज्य शक्तिपूजां समाचरेदिति ॥

रतिकामोपरि वज्रवैरोचनीये देहि देहि एहि एहि गृह्ण गृह्ण मम सिद्धिं देहि देहि मम शत्रून् मारय मारय करालिके हूँ फट् स्वाहेति पीठमन्त्रः ॥ सर्व्वत्र प्रणवादिनमोऽन्तेन पूजयेत् । पुनर्ध्यात्वावाहयेत् । सर्व्वसिद्धिवर्णनीये सर्व्वसिद्धिडाकिनीये वज्रवैरोचनीये इहावह इहावह पुनस्तन्मन्त्रमुच्चार्य्य इह तिष्ठ इह तिष्ठ इह सन्निधेहि इह सन्निरुध्यस्व इत्यनेनावाह्य आं ह्रीं क्रों हंसः इत्यनेन प्राणप्रतिष्ठां कृत्वा । ओम् आं खड्गाय हृदयाय स्वाहा इत्यादिना षडङ्गं विन्यस्य यथाशक्ति पूजां कृत्वा बलिं दद्यात् । यथा । वज्रवैरोचनीये देहि देहि एहि एहि गृह्ण गृह्ण इमं बलिं मम सिद्धिं देहि देहि मम शत्रून् मारय मारय करालिके हूं फट् स्वाहा इति मन्त्रेण । ततो देव्या दक्षिणे ओँ वर्णिन्यै नमः । वामे ओँ डाकिन्यै नमः । ततो देव्यङ्गे षडङ्गं संपूज्य दक्षिणे ओँ शङ्खनिधये नमः । वामे ओँ पद्मनिधये नमः । पूर्व्वादिदिक्षु लक्ष्मीं लज्जां मायां वाणीञ्च पूजयेत् । विदिक्षु ब्रह्मविष्णुरुद्रेश्वरान् मध्ये सदाशिवं सर्व्वत्र प्रणवादि नमोऽन्तेन पूजयेत् । ततः पञ्च पुष्पाञ्जलिं दत्त्वा आवरणानि पूजयेत् । अग्नीशासुरवायुषु मध्ये दिक्षु च ओम् आं खड्गाय हृदयाय स्वाहा इत्यादिना षडङ्गानि संपूज्य अष्टपत्रेषु पूर्व्वादिक्रमेण ओम् ह्रीं काल्यै नमः एवं वर्णिन्यै डाकिन्यै भैरव्यै महाभैरव्यै इन्द्राक्ष्यै पिङ्गाक्ष्यै संहारिण्यै सर्व्वत्र प्रणवादिनमोऽन्तेन पूजयेत् । यथा,—
"एकां नामाभिधां कालीं वर्णिनीं डाकिनीं तथा ।
भैरवीञ्च महापूर्व्वां भैरवीं तदनन्तरम् ॥
इन्द्राक्षीञ्च सपिङ्गाक्षीं ततः संहारकारिणीम् ।
पूर्व्वादिके दले पूज्याः शक्तयश्च यथाक्रमम् ॥
प्रणवादिनमोऽन्तेन लज्जाबीजं समुच्चरन् ।"
पद्ममध्ये हूं हूं फट् नमः स्वाहा नमः । देव्या दक्षिणे सम्राट्छन्दसे नमः । देव्या उत्तरे सर्व्ववर्णेभ्यो नमः । पुनर्दक्षिणे ओं बीजशक्तिभ्यां नमः । पत्राग्रेषु पूर्व्वादिक्रमेण ब्राह्म्यै माहेश्वर्य्यै कौमार्य्यै वैष्णव्यै वाराह्यै इन्द्राण्यै चामुण्डायै महालक्ष्म्यै सर्व्वत्र प्रणवादिनमोऽन्तेन पूजयेत् । ततश्चतुर्दिक्षु द्वारेषु ओम् करालाय नमः । विकरालाय नमः । एवं अतिकरालाय महाकरालाय । यथा, भैरवीये ।
"पूर्व्वद्वारे करालञ्च विकरालञ्च दक्षिणे ।
पश्चिमेऽतिकरालञ्च महाकरालमुत्तरे ॥"
ततो धूपादिविसर्ज्जनान्तं कर्म्म समापयेत् ।
विसर्ज्जने त्वयं विशेषः । संहारमुद्रां प्रदर्श्य आत्मन्यारोप्य वामनासापुटेन ।
"योनिमुद्रासमारूढां प्रदीपकलिकोज्ज्वलाम् ।
लयपथे विद्युमिव क्रमेण चोत्थितां गताम् ॥
इमं मन्त्रं समुच्चार्य्य चक्रस्थां निवेशयेत् ।
उत्तरे शिखरे इत्यादि । अस्य पुरश्चरणं लक्ष-



जपः । सिद्धविद्याकृत ॥ * ॥ अधिकारी तु भैरवीये ।
"रात्रौ बलिः प्रदातव्यो मधु[illegible] ।
अथवा मधुपानाद्यैर्नृत्यगीतादिमङ्गलैः ॥
मन्त्रस्तु ।
उच्चरेत् प्रथमं पूर्व्वं सर्व्वसिद्धिप्रदेऽन्वितम् ।
वर्णिनीये ततो वाच्यं सर्व्वसिद्धिप्रदे ततः ॥
डाकिनीये ततो वाच्यं देवीनाम ततः परम् ।
एह्येहीति ततो वाच्यं इमं बलिमनन्तरम् ॥
यज्ञ यज्ञ ततः प्रोक्ता मम सिद्धिमनन्तरम् ।
देहि देहीति मायं च ततः षट्स्वाहया युतः ॥
बलिमन्त्रः समाख्यातः पूजितोऽयं सुरेश्वरीति ॥
मन्त्रान्तरम् ।
भुवनेशी कामबीजं कूर्च्चबीजञ्च वाग्भवम् ।
भुवनेशी कूर्च्चबीजं वाग्भवं तदनन्तरम् ॥
वज्रवैरोचनीये च हूं फट् स्वाहा ततः परम् ॥
अस्य पूजाप्रयोगध्यानपूजादिकं षोडशीवत् कार्य्यम् ॥ * ॥
हृल्लेखा मारणं लक्ष्मीर्व्वाग्भवं कूर्च्चमेव च ।
अष्टान्ता छिन्नमस्ताया महाविद्या प्रकीर्त्तिता ॥
अस्यापि षडृषी विद्या जगत्स्वपि न सिध्यति ।
षड्वर्णोऽयं मनुः साध्यासाध्यादोषवर्जितः ॥
अस्या ध्यानमहं वक्ष्ये शृणुष्व कमलानने ! ।
प्रत्यालीढपदां सदैव दधतीं छिन्नं शिरः कर्त्रिकां
दिग्वस्त्रां स्वकबन्धशोणितसुधाधारां पिबन्तीं मुदा ।
नागाबद्धशिरोमणिं त्रिनयनां हृद्युत्पलालङ्कृतां
रत्यासक्तमनोभवोपरि दृढां ध्यायेज्जवासन्निभाम् ॥
दक्षे चातिसिता विमुक्तचिकुरा कर्त्रीं तथा खर्परं
हस्ताभ्यां दधती रजोगुणभवा नाम्नापि सा वर्णिनी ।
देव्याश्छिन्नकबन्धतः पतदसृग्धारां पिबन्ती मुदा
नागाबद्धशिरोमणिर्म्मनुविदा ध्येया सदा सा सुरैः ॥
वामे कृष्णतनुस्तथैव दधती खड्गं तथा खर्परं
प्रत्यालीढपदा कबन्धविगलद्रक्तं पिबन्ती मुदा ।
सैषा या प्रलये समस्तभुवनं भोक्तुं क्षमा तामसी
शक्तिः सापि परात्परा भगवती नाम्ना परा डाकिनी ॥
इति ध्यानम् ।
अस्याः पूजादिकं सर्व्वं षोडशीवत् कार्य्यम् ॥ * ॥
मन्त्रान्तरम् ।
तारं लज्जाद्वयं वज्रवैरोचनीये हूं फट् स्वाहा
अस्यापि ध्यानपूजादिकं सर्व्वं षोडशीवत् ॥ * ॥
वियत्चक्रयुतं बिन्दुनादयुक्तं ततः शिवे ! ।
एकाक्षरी महाविद्या त्रैलोक्यवशकारिणी ॥
कर्णं दीर्घं कमारः ॥
ठठान्तैषा महाविद्या त्रैलोक्यमोहकारिणी ।
ताराद्यन्ता भवेदेषा चतुर्व्वर्गफलप्रदा ॥ * ॥

तन्त्रान्तरे यथा,—
वज्रवैरोचनीये च कूर्च्चद्वयं स्वाहान्तक: ।
ताराद्येका महाविद्या सर्व्वतेजोऽधिकारिणी ॥
षोडशाक्षरविद्या विद्या चतुर्व्वर्गफलप्रदा ।
आगपूजादिकं सर्व्वं षोडशीवत् समाचरेत् ॥*॥
इदानीं षोडशीविद्याप्रसङ्गेनाह ।
तथा वर्णप्रयोगेन नाम्नापाख्या च षोडशी ।
लक्ष्मीबीजादिका चैव सर्व्वैश्वर्य्यप्रदायिनी ॥
अन्यासा सर्व्वभूतानां मोहिनी विद्याकर्षिणी परा ।
कूर्च्चाद्या सर्व्वजन्तूनां महापातकनाशिनी ॥
वाग्भवाद्या यदा देवी वाग्मीत्वप्रदायिनी ।
एषा तु षोडशीविद्या वेद्या सप्तदशाक्षरी ॥
श्रीबीजपुटिता या तु लक्ष्मीवृद्धिकरी सदा ।
लज्जया पुटिता विद्या त्रैलोक्याकर्षिणी परा ॥
कूर्च्चेन पुटिता सर्व्वपापिनां पापहारिणी ।
वाग्बीजपुटिता चैषा वाग्मीत्वप्रदायिनी ॥
चतुर्व्विधेति विज्ञेया प्रिये ! सप्तदशाक्षरी ।
ताराद्या षोडशी चान्या भवेत् सप्तदशाक्षरी ।
एषा विद्या महाविद्या भुक्तिमुक्तिकरी सदा ।
आमला भुवनेशानी कूर्च्चबीजं सरस्वती ॥
वज्रवैरोचनीये च पूर्व्वबीजानि चोच्चरेत् ।
फट् स्वाहा च महाविद्या वसुचन्द्राक्षरी परा ।
तारादौ कामबीजाद्या महाविद्यास्वरूपिणी ।
एते विद्योत्तमे देवि ! भुक्तिमुक्तिप्रदे शुभे ॥*॥
लज्जाद्यादिपुटिता पूर्व्वा रन्ध्रचन्द्राक्षरी भवेत् ।
चतुर्द्धा च महाविद्या चतुर्व्वर्गफलप्रदा ॥
प्रणवाद्या यदा चैषा भोगमोक्षकरी सदा ।*।
विद्यान्तरं प्रवक्ष्यामि सावधानावधारय ।
कूर्च्चलज्जाकूर्च्चवाग्बीजवज्रवैरोचनीये हूं ॥
अस्त्रं स्वाहा महाविद्या चतुर्द्दशाक्षरी मता ।
सर्व्वैश्वर्य्यप्रदा चैषा सर्व्वसंमोहकारिणी ॥*॥
भुवनेशी श्रियं लज्जा वाग्बीजं प्रणवं तत: ।
वज्रवैरोचनीये च फट् स्वाहा च तथापरा ॥
चतुर्द्दशाक्षरी चैषा चतुर्व्वर्गफलप्रदा ।
एषा विद्या महाविद्या जन्ममृत्युविनाशिनी ॥*॥
तन्त्रान्तरे ।
रमा कामस्तथा लज्जा वाग्भवं वज्र वै पदम् ।
रोचनीये लज्जाद्यन्तमस्त्रं स्वाहासमन्वितम् ॥
एवं वा षोडशी प्रोक्ता सर्व्वकामफलप्रदा ।
कथिता: सकला विद्या: सारात्सारतरा: शुभा: ॥
आसां ऋषिर्भैरवोऽयं नाम्ना तु क्रोधभूपति: ।
सम्राट् छन्दो देवता च छिन्नमस्ता प्रकीर्त्तिता ।
षड्दीर्घभाक्स्वरेणैव प्रणवाद्येन सुन्दरि ! ।
षड्गाद्येन ठान्तानि षड्ङ्गानि प्रकल्पयेत् ॥
नारदीयादिकल्पोक्ता ता: सुविद्या: सुरासुरै: ।
सकलेषु च वर्णेषु सकलेष्वाश्रमेषु च ॥
अग्निमेषु च वर्णेषु भुक्तिमुक्तिप्रदायिका ।
प्रणवाद्याश्च या विद्या शूद्रादौ न समीरिता: ॥
अश्वाप्येव विधिरोऽयं बोधयेत् समुपासयेत् ।
डाकिनी वा भवत्येव डाकिनीभि: प्रबाधते ॥
पतिहीना पुत्रहीना भवा स्यात् विद्वयोगिनी ।
इति ते कथितं सर्व्वं रहस्यमखिलं प्रिये ! ॥

अतिगोप्यतरस्तेन सम्या रक्षोऽपि ते प्रिये ! ।
एतस्या न्यासपूजादिकं षोडशीवत् कार्य्यम् ॥*॥
नाभौ शुभ्रारविन्दं तदुपरि कमलं मण्डलं चण्ड-
रश्मे:
संसारस्यैकसारां त्रिभुवनजननीं धर्म्म-
कामोदयाढ्याम् ।
तस्मिन् मध्ये त्रिकोणे त्रितयतनुधरां छिन्नमस्तां
प्रशस्तां
तां वन्दे ज्ञानरूपां निखिलभयहरां योगिनीं
योगमुद्राम् ॥”
इति छिन्नमस्ताप्रकरणम् । इति तन्त्रसार: ॥
छिन्नरुह:, पुं, ( छिन्नोऽपि रोहतीति । रुह+
“इगुपधज्ञेति ।” ३ । १ । १३५ । इति क: । )
तिलकवृक्ष: । इति राजनिर्घण्ट: ॥
छिन्नरुहा, स्त्री, ( छिन्ने सत्यपि रोहतीति । रुह
+क: । अजादित्वात् टाप् । ) गुडूची । इत्य-
मर: । २ । ४ । ८२ ॥ (यथास्या: पर्य्याया: ।
“वत्सादनी छिन्नरुहा मधुपर्ण्यमृतामरा ।
कुण्डल्यमृतवल्ली च गुडूची चक्रलक्षणा ॥”
इति वैद्यकरत्नमालायाम् ॥)
स्वर्णकेतकी । शल्लकी । इति राजनिर्घण्ट: ॥
छिन्नवेशिका, स्त्री, (छिन्नो विच्छिन्नो वेशो यस्या: ।
संज्ञायां कन् । ततष्टापि अत इत्वम् ।) पाठा ।
इति शब्दचन्द्रिका । आकनादी इति भाषा ॥
छिन्ना, स्त्री, (छिद्यतेऽसौ । छिद+क्त । “अजा-
द्यतष्टाप् ।”४।१।४। इति टाप् ।) गुडूची । (यथा,
भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
“गुडूची मधुपर्णी स्यादमृताऽमृतवल्लरी ।
छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च ॥”
छिद्यते कुलात् वहिष्क्रियते इति । ) पुंश्चली ।
इति विश्व: ॥
छिन्नोद्भवा, स्त्री, ( छिन्ना विभिन्ना सत्यपि उद्भवति
पुनर्जायते इति । उत्+भू+अच् । यद्वा,
छिन्ने छेदनेऽपि उद्भव उत्पत्तिर्यस्या: । )
गुडूची । इति राजनिर्घण्ट: ॥ (गुडूचीशब्देऽस्या
विवृतिर्ज्ञेया ॥)
छिलिहिण्ड:, पुं, ( चिलिना वसनखण्डरूपतया
हिण्डते अनाद्रियते इति । हिडि अनादरे+
अच् । पृषोदरादित्वात् चस्य छ: । ) पाताल-
गरुडवृक्ष: । इति भावप्रकाश: ॥
छुछुन्दरी, स्त्री, ( छुछुमित्यव्यक्तशब्दो दीर्य्यति
निर्गच्छत्यस्या: । दॄ+“सर्व्वधातुभ्य इन् ।” उणां
४ । ११७ । इति इन् । तत: कृदिकारादिति
ङीष् । ) जन्तुविशेष: । छूँचा इति भाषा । तत्-
पर्य्याय: । गन्धमूषी २ । इति हेमचन्द्र: । ४ ।
३६७ ॥ चिका: ३ वेशनकुल: ४ पुष्प: ५ गन्ध-
मूषिका:६ । इति त्रिकाण्डशेष: ॥ गन्धमूषिका७।
इति हलायुध: । राजपुत्री ८ प्रतिमूषिका ९
सुगन्धिमूषिका १० गन्धशुण्ठिनी ११ शुचि-
मूषिका १२ । इति राजनिर्घण्ट: ॥ गन्धाखु:१३
गन्धनकुल: १४ चुचु: १५ । इति हारावली ।
(छुछुन्दरि:१६ । इति मार्कण्डेयपुराणम् ।१५।३१॥

“अस्थिशृङ्खलायुतेन क्षिप्रं गण्डमालां सुदारुणाम् ।
छुछुन्दर्य्या विपक्वस्तु तथा तैलवरं शुभम् ॥”
इति वैद्यकचक्रपाणिसंग्रहे गण्डमालाधिकारे ॥)
छुट, क छि छिदे । इति कविकल्पद्रुम: ॥ (चुरां-
तुदां च-सकं-सेट् । ) क, छोटयति । छि,
छुटति । अच्छुटीत् । इति दुर्गादास: ॥
छुद्रं, क्ली, (छद+रक् । पृषोदरादित्वात् उत्वम् ।)
प्रतीकरणम् । रक्षि: । इति संक्षिप्तसारे
उणादिवृत्ति: ॥
छुप, श औ स्पर्शे । इति कविकल्पद्रुम: ॥ (तुदां-
परं-सकं-अनिट् ।) श, छुपति । औ, छोप्ता ।
इति दुर्गादास: ॥
छुप:, पुं, ( छुप+घञर्थे क: ।) स्पर्श: । समीरणम् ।
इति मेदिनी । पे, ६ ॥ चपल: । गुल्मम् ।
इति विश्व: ॥
छुर, छिदे । इति कविकल्पद्रुम: ॥ ( भ्वां-परं-
सकं-सेट् । छोरति । अच्छोरीत् ॥ )
छुर, छि लेपे । इति कविकल्पद्रुम: । (तुदां-परं-
सकं सेट् । ) छि, छुरति, अच्छुरीत् चुच्छोर ।
लेपश्छेद: । इति दुर्गादास: ॥
छुरा, स्त्री, ( छुरति रञ्जयति नाशयति दुर्गन्धा-
दिकमिति वा । छुर+क: टाप् च । ) सुधा ।
चूर्णम् । इति हारावली । १३५ ॥
छुरिका, स्त्री, ( छुरति छिनत्तीति । छुर+वुन् ।
यद्वा, छुरी+स्वार्थे कन् । पूर्व्वह्रस्वश्च । )
अस्त्रविशेष: । छुरी इति ख्याता । तत्पर्य्याय: ।
शस्त्री २ असिपुत्री ३ असिधेनुका ४ । इत्य-
मर: । २ । ८ । ९२ ॥ छुरी ५ । इति भरत: ॥
खुरी ६ छूरी ७ शपाणिका ८ धेनुपुत्री ९ ।
इति हेमचन्द्र: ॥ छूरिका १० । इति शब्द-
रत्नावली ॥ (यथा, कथासरित्सागरे ।७५।१४४ ।
“तावत् स्वयमपश्यत्तां छित्त्वा छुरिकया मुहु: ।
खादन्ती तस्य मांसानि पुंस: शूलाग्रवर्त्तिन: ॥”)
छुरितं, त्रि, ( छुर+क्त: । ) खचितम् । इति
जटाधर: ॥ ( रञ्जितम् । यथा, माघे ।१।२७।
“परस्परेण छुरितामलच्छवी
तदेकवर्णाविव तौ बभूवतु: ॥”)
छिन्नञ्च ॥
छुरी, स्त्री, ( छुरति छिनत्तीति । छुर छिदे+
“इगुपधज्ञेति । ” ३ । १ । १३५ । इति क: ।
ततो ङीष् । ) छुरिका । इति भरत: ॥
छूरिकापत्री, स्त्री, ( छुरिका इव पत्राणि यस्या: ।
स्त्रियां ङीष् । ) श्वेता । इति राजनिर्घण्ट: ॥
छूरी, स्त्री, ( छुरी+पृषोदरादित्वात् दीर्घ: । )
छुरिका । इति हेमचन्द्र: । ३ । ४४८ ॥
छृद, कि सन्दीपे । इति कविकल्पद्रुम: ॥ ( चुरां-
पक्षे भ्वां-परं-सकं-सेट् । ) सन्दीपो दीप्ती
करणम् । कि, छर्द्दयति छर्दति दीपं लोक: ।
इति दुर्गादास: ॥
छृद, उ ञ ध इर् देवने । त्विषि । वमने । इति
कविकल्पद्रुम: ॥ (रुधां-उभं-सकं-सेट् । उदित्वात्
क्त्वावेट् । ) उ, छर्दित्वा छृत्वा । ञ ध, छृणत्ति

योगिनीतन्त्रे ।
"कार्त्तिकेऽमलपक्षे तु नवम्याञ्च विधानतः ।
प्रातःकाले जगद्धात्रीं पूजयेद्दीपमालया ॥"
आगमतत्त्वसारे ।
"कार्त्तिकेऽमलपक्षे तु नवम्यां भौमवासरे ।
आविर्भूता जगद्धात्री युगादौ दैत्यनाशिनी ॥"
उत्तरकामाख्यातन्त्रे ।
"कार्त्तिके शुक्लपक्षे तु त्रेतायां प्रथमेऽहनि ।
त्रिसन्ध्यं पूजयेद्देवीं दुर्गां सम्पत्प्रवृद्धये ॥" * ॥
कुब्जिकातन्त्रे ।
"कार्त्तिके शुक्लपक्षे तु नवम्यां जगदम्बिकाम् ।
दुर्गां प्रपूजयेद्भक्त्या धर्म्मकामार्थसिद्धये ॥" * ॥
दुर्गाकल्पे विद्योत्पत्तिः ।
"कार्त्तिके शुक्लपक्षेऽह्नि भौमवारे जगत्प्रसूः ।
सर्व्वदेवहितार्थाय दुर्वृत्तशमनाय च ॥
आविरासीज्जगच्छान्त्यै युगादौ परमेश्वरी ॥"
व्रतकालविवेकधृतवचनम् ।
"कार्त्तिकेऽमलपक्षस्य त्रेतायां नवमेऽहनि ।
पूजयेत्तां जगद्धात्रीं सिंहपृष्ठे निषेदुषीम् ॥" * ॥
स्मृतिः ।
"युगाद्या वर्षवृद्धिश्च सप्तमी पार्व्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥" * ॥
तथ्यतत्त्वार्णवे ।
"कार्त्तिकेऽमलपक्षे तु युगाद्या नवमी स्मृता ।
पूर्व्वाह्णसमये तत्र पूजाविधिरिहोदितः ॥" * ॥
भविष्यपुराणतथ्यतत्त्वार्णवयोः ।
"कार्त्तिके शुक्लपक्षे तु युगाद्या नवमी स्मृता ।
पूर्व्वाह्णसमये कालात्मिका परदिने यदि ॥
तत्र पूजादिकं कुर्य्यात् पिष्टनिर्म्मितवाहने ॥"
स्मृतिसागरे
"कार्त्तिकस्य युगाद्यायामृद्धिकामोऽर्च्चयेदुमाम् ॥"
इति जगद्धात्रीपूजाकालव्यवस्था ॥ * ॥ * ॥
अथ जगद्धात्रीविद्योत्पत्तिः ।

श्रीपार्व्वत्युवाच ।

"भगवन् ! प्राणनाथेश ! सर्व्वतत्त्वविशारद ! ।
श्रुता कात्यायनीविद्यासमुत्पत्तिस्त्रिलोचन ! ॥
महादुर्गाजगद्धात्रीविद्योत्पत्तिर्भवेद्यतः ।
तत् सर्व्वं ब्रूहि भगवन् ! कृपया परमेश्वर ! ॥
यदि न कथ्यते देव ! विमुञ्चामि तदा तनुम् ॥

श्रीशिव उवाच ।

शृणु पार्व्वति ! वक्ष्यामि रहस्यं परमाद्भुतम् ।
यत् श्रुत्वा लभते देवि ! सौभाग्यं सुखसुत्तमम् ॥
पुरा पुरन्दरमुखाः सेश्वरत्वाभिमानिनः ।
प्राहुः किमीश्वरोऽस्मत्तः पदतिरिक्तः सुरानिति ॥
अथ दुर्गा जगन्माता नित्या चैतन्यरूपिणी ।
एतेषां धर्म्मसेतूनामिन्द्रादीनां नियन्तृणाम् ॥
करिष्यामीति निश्चित्य ज्योतीरूपं दधात्मकम् ।
तेषामाविरभूद्दुर्गा जगद्धात्री जगन्मयी ॥
कोटिसूर्य्यप्रतीकाशा चन्द्रकोटिसमप्रभा ।
ज्वलन्तं पर्व्वतमिव सर्व्वलोकभयङ्करी ॥
तद्दृष्ट्वा सुराः सर्व्वे भयमापुर्म्महौजसः ।
किमेतत्र विनिश्चेतुं शक्ताके ह्यभवन् सुराः ॥
वायुमाहुः समाहूय किमेतत् परमाद्भुतम् ॥
विजानीहि महावीर ! मातरिश्वा दिवःपते ! ॥
ततो वायुर्द्रुतं तत्र गतस्तेजोऽन्तिकं तदा ।
तमन्तिकमुपायातं प्राह तेजोमयी ततः ॥
बलवान् कस्त्वमायातो वीर्य्यं किञ्चास्ति वा त्वयि ।
आदातुं शक्यते सर्व्वं पृथिवीतलसम्भवम् ॥
इति प्रत्युक्तवान् वायुः क्षणं तत्रैव तिष्ठति ।
आदत्स्वैतत् तृणमिति निदधौ वायवे तृणम् ॥
वायुः सर्व्वप्रयत्नेन नादातुं तत् क्षमोऽभवत् ।
ततो देवाः प्राहुरग्निं भीता उद्विग्नमानसाः ॥
अग्ने ! एतद्विजानीहि किमेतत् कर्म्म चाद्भुतम् ।
इत्युक्तो देवताबृन्दैरग्निस्तेजोऽन्तिकं गतः ॥
अग्निरहं जातवेदा वा तेजो वागित्युवाच तम् ।
स प्रोक्तवानग्निरस्मि सर्व्वदाहकशक्तिकः ॥
दहैतत्तृणमत्यल्पमिति तस्मै तृणं ददौ ।
अग्निः सर्व्वप्रयत्नेन दग्धुं नैतत् क्षमोऽभवत् ॥
ततो निवर्त्तते वह्निर्भूत्वा सोऽपत्रपान्वितः ।
एकत्रस्थाः सुराः सर्व्वे मन्त्रयामासुरुत्तमम् ॥
इयमेवेश्वरी नूनं स्तोष्यामो नेश्वरा वयम् ।
इति निश्चित्य सुधियस्तुष्टुवुः परमेश्वरीम् ॥
प्राहुर्देवगणाः सर्व्वे त्वमीशा नेश्वरा वयम् ।
ईश्वरत्वाभिमानेन यदस्माकं सुदुष्कृतम् ॥
क्षन्तुमर्हसि तत् सर्व्वं कृपया जगदम्बिके ! ।
तव रूपं सुगोप्यं यन्मङ्गलं सर्व्वमङ्गलम् ॥
तद्द्रष्टुं वयमिच्छामो देहि दर्शनमुत्तमम् ।
इत्युक्तानां सुराणामाविरासीच्छिवाम्बरे ॥
तेजस्यन्तर्हिते तस्मिन् चमत्कारकलेवरे ।
नगेन्द्रोपरि सुस्मेरा सर्व्वालङ्कारभूषिता ॥
चतुर्भुजा महादेवी रक्ताम्बरधरा शुभा ।
बालार्कसदृशी देहा नागयज्ञोपवीतिनी ॥
त्रिनेत्रा कोटिचन्द्राभा देवर्षिमुनिसेविता ।
दर्शयामास देवानामेवं रूपं जगन्मयी ॥
ततस्तां तुष्टुवुर्देवा जगद्धात्रीं महेश्वरीम् ।
वरं प्रापुः सुरगणा यथेष्टं त्रिदशालये ॥
तत्रैवान्तर्हिता देवी महादुर्गा जगन्मयी ।
इति ते कथितं भद्रे ! विद्योत्पत्तिं सुदुर्लभाम् ॥"

इति कात्यायनीतन्त्रे ७६ पटलः ॥ * ॥

श्रीशिव उवाच ।

"अथ दुर्गामनुं वक्ष्ये शृणुष्व हरवल्लभे ! ।
यस्य प्रसादमात्रेण मुच्यते भवबन्धनात् ॥
शान्तवर्णं समुद्धृत्य वामकर्णं विभूषितम् ।
इन्दुबिन्दुसमायुक्तं बीजं परमदुर्लभम् ॥
चतुर्व्वर्गप्रदं साक्षान्महापातकनाशनम् ।
एकाक्षरीसमा नास्ति विद्या त्रिभुवने प्रिये ! ॥
कूर्च्चाद्यां वा जपेद्विद्यां तदन्ते वह्निसुन्दरी ।
लज्जाद्यां वा जपेद्विद्यां षडर्णां वा जपेत् सुधीः ॥
वधूबीजयुतां वापि स्वाहान्तां वा जपेत् पुनः ।
लक्ष्म्याद्यां वा जपेद्विद्यां चतुर्व्वर्गफलाप्तये ॥
वाग्भवाद्यां जपेद्वापि प्रणवाद्यां जपेत् पुनः ।
कामबीजादिकां वापि षडर्णां वा जपेत् पुनः ॥
अष्टादश विविधा विद्या कथिता ब्रह्मणा पुरा ।
विना गन्धैर्व्विना पुष्पैर्व्विना होमपुरःसरैः ॥



प्राणायामं विना देवि ! जपमात्रेण सिद्धिदा ।
मन्त्रस्यास्य ऋषिर्द्देवि ! नारदः परिकीर्त्तितः ॥
गायत्री छन्द आख्यातं जगद्धात्री च देवता ।
चतुर्व्वर्गप्रदा दुर्गाबीजमस्य प्रकीर्त्तिता ॥
दीर्घस्वरसमायुक्तनिजबीजानि पार्व्वति ! ।
विन्यसेदात्मनो देवि ! हृदयादिषु शङ्करि ! ॥
पूर्व्ववन्न्यासमखिलं पूर्व्ववत् सर्व्वमाचरेत् ।
कालीवदाचरेद्विद्यां जपेद्विद्यामनन्यधीः ॥
लज्जाद्यष्टकैर्द्देवि ! पुरश्चरणमीरितम् ।
यथास्थाने यथाकाले यथाचारविधानतः ॥
प्रजपेत् परया भक्त्या दुर्गां दुर्गतिनाशिनीम् ॥ * ॥
ध्यानमस्याः प्रवक्ष्यामि शृणुष्व नगनन्दिनि ! ॥
सिंहस्कन्धाधिरूढां नानालङ्कारभूषिताम् ।
चतुर्भुजां महादेवीं नागयज्ञोपवीतिनीम् ॥
शङ्खचक्रधनुर्व्वाणशोभमानकराम्बुजाम् ।
रक्तवस्त्रपरीधानां बालार्कसदृशीतनुम् ॥
नारदाद्यैर्म्मुनिगणैः सेवितां भवसुन्दरीम् ।
त्रिवलीवलयोपेतनाभिनालमृणालिनीम् ॥
रत्नद्वीपे महाद्वीपे सिंहासनसमन्विते ।
प्रफुल्लकमलारूढां ध्यायेत्तां भवगेहिनीम् ।
एवं ध्यात्वा जगद्धात्रीं पूर्व्वोक्तपूजनं चरेत् ॥
यन्त्रमस्याः प्रवक्ष्यामि शृणुष्व हरवल्लभे ! ।
त्रिकोणमिलतश्चादौ षट्कोणं विलिखेत्ततः ॥
अष्टपत्रं ततो लिख्य चिरेखावेष्टितं ततः ।
चतुर्भूपुरसंयुक्तं विलिखेद्विधिनायुना ॥
तत्र तां पूजयेद्देवीं स्वप्रलतिकरूपिणीम् ।
प्रभाद्याः शक्तयः पूज्या गन्धाद्यैर्नवकोणके ॥
प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः
सुप्रभा विजया सर्व्वसिद्धिदा नव शक्तयः ॥
ह्रीमाद्याः पूजयेत्तास्तु रक्तचन्दनदूर्व्वकैः ।
शक्तिपद्मासनिधौ देव्या वामदक्षिणयोगतः ॥
पूजयेत् परया भक्त्या रक्तचन्दनदूर्व्वकैः ।
अर्घ्यदानं ततः कुर्य्यात् पूजान्ते नगनन्दिनि !
अङ्गावृत्तिः पुनः पूज्या पत्रकोणेषु मातरः ।
वज्राद्यायुधसंयुक्ता भूपुरे लोकनायकाः ॥"

इति कात्यायनीतन्त्रे ७७ पटलः ॥ * ॥

श्रीशिव उवाच ।

"पूजा तिथिविशेषेण चतुर्व्वर्गफलाप्तये ।
कर्त्तव्या या तु दुर्गायास्तां शृणुष्व शुभानने ! ॥
अष्टम्याञ्च चतुर्द्दश्यां नवम्यां वापि यत्नतः ।
यः पूजयेन्महादुर्गां सोऽभीष्टफलमाप्नुयात् ॥
पौर्णमास्याममायां वा रविसंक्रमणे तथा ।
शनिभौमदिने चैव पूजयेत् परमेश्वरीम् ॥
सुखं सौभाग्यमारोग्यमैश्वर्य्यं लभते ध्रुवम् ।
शनिभौमदिने चैव यदि स्यादष्टमी तिथिः ॥
तत्र पूज्या जगद्धात्री पुत्रपौत्रधनप्रदा ।
सोमवारेऽप्यमावास्या श्रवणर्क्षसंयुता ॥
उत्तरा सप्तमीयुक्ता आदित्ये च पार्व्वति !
चतुर्थ्यङ्गारवारे च रोहिणीसंयुता यदि ॥
शुक्लाष्टम्यां तथा जाती यदि स्यात् परमेश्वरि !
एषु पूजा महादेव्याः कर्त्तव्या सर्व्वसिद्धये ॥
मधुमासे सिताष्टम्यां नैवाद्यमिलतयेऽष्टमि ।

पौर्णमास्यां तथा चैत्रे जगन्नाथ महेश्वरि ! ।
मिथुनेऽर्के द्वितीयायां कासकी द्वादशीदिने ।
भाद्रे शोकविशोकाख्यां चाश्विने शुक्लपञ्चमी ॥
जन्माष्टमीं भाद्रपदे नवम्यां च विशेषतः ।
अमायां कार्त्तिके चैव नवम्यां शुक्लपञ्चमी ॥
नन्दां मार्गशिरे भूते पौषेऽष्टम्यां सितेतरे ।
माघे च शुक्लपञ्चम्यां फाल्गुन्यां च सुरेश्वरि ! ॥
एषु द्वादशमासेषु तिथिष्वेतासु पार्व्वतीम् ।
पूजयेत् परया भक्त्या यथाविभवविस्तरैः ॥
राजराजेश्वरो भूत्वा वसेत् कल्पायुतं दिवि ।
पुत्त्रपौत्रधनर्द्धीणामधिपो जायते ऽचिरात् ॥
अन्ते देवीपुरं याति भुक्त्वा भोगान् यथेप्सि-
तान् ॥

श्रीपार्व्वत्युवाच ।
देवदेव ! महादेव ! विश्वनाथ ! महेश्वर ! ।
श्रुता तव मुखाम्भोजाद्दुर्गापूजा महाफला ॥
केन वा पूजिता देवी कस्य वा किञ्च सिध्यति ।
केन प्रकाशिता मर्त्त्ये तत् सर्व्वं कथय प्रभो ! ॥

श्रीशिव उवाच ।
रामरावणयोर्युद्धे दुर्गा रामेण पूजिता ।
अवधीद्रावणं राम इषे मासि प्रपूजनात् ॥
तेन लोकाश्चरिष्यन्ति दुर्गायाः शारदोत्सवम् ।
एवमाराध्य देवेशीमिन्द्रजिद्रावणात्मजः ॥
अभवत् कार्त्तिके यो वै दुर्गामेवं समर्चयन् ।
अमायां कार्त्तिके मासि तारकासुरनाशकः ॥
कुम्भराशिगते चन्द्रे नवम्यां कार्त्तिकस्य च ।
उपवासैर्दितो भानुर्दुर्गामाराध्य यत्नवान् ॥
पुत्रारोग्यवरं लेभे लोकसाक्षित्वमेव च ।
तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि ॥
प्रपूजयेन्महादुर्गां धर्म्मकामार्थमोक्षदाम् ।
एवं मार्गशिरे मासि वृषराशिगते विधौ ॥
चतुर्द्दश्यां निशायान्तु चन्द्रः संपूज्य पार्व्वतीम् ।
महापापाद्विमुक्तोऽसौ राज्यैश्वर्य्यमवाप च ॥
तेन मार्गशिरे मासि चतुर्द्दश्यां प्रपूजयेत् ।
इन्द्रत्वमेवमिन्द्रोऽसौ लेभे दुर्गां समर्च्चयन् ॥
ब्रह्मत्वमपि विष्णुत्वं रुद्रत्वञ्च महेश्वरि ! ।
देवत्वं सर्व्वदेवानामभवच्छक्तिकार्च्चनात् ॥
भूतं भव्यं भविष्यं यत् स्थावराणि चराणि च ।
सर्व्वं दुर्गाप्रभावेण स्वस्वभोगमवाप्नुयुः ॥
विना दुर्गां महेशानि ! न किञ्चिदपि वर्त्तते ।
इति ते कथितं देवि ! संक्षेपेण तवाग्रतः ॥
महादुर्गाजगद्धात्रीविद्योत्पत्तिं सुदुर्लभाम् ॥”
इति कात्यायनीतन्त्रे ७८ पटलः ॥
(सरस्वती । यथा, मार्कण्डेये । २३ । ३० ।
“जगद्धात्रीमहं देवीमारिराधयिषुः शुभाम् ।
स्तोष्ये प्रणम्य शिरसा ब्रह्मयोनिं सरस्वतीम् ॥”)
जगद्बलः, पुं, ( जगतां बलं यस्मात् ।) वायुः । इति त्रिकाण्डशेषः ॥
जगद्योनिः, पुं, ( जगतां योनिरुत्पत्तिस्थानम् । ) शिवः । इति त्रिकाण्डशेषः ॥ ( यथा, महाभारते । ७ । २०० । १३ ।
“जगद्योनिं जगद्वीजं जयिनं जगतो गतिम् ॥”)
विष्णुः । इति तस्य सहस्रनाम ॥ (यथा, विष्णुपुराणे । १ । १२ । ३२ ।
“तं नमेत जगद्योनिमनादिनिधनं हरिम् ॥”
केचित्तु हरिविशेषणं कथयन्ति ॥)
ब्रह्मा । ( यथा, कुमारे । २ । ९ ।
“जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ॥”)
पृथिवी स्त्री । इति शब्दचन्द्रिका ॥
जगद्वहा, स्त्री, ( जगन्ति वहति धारयतीति । वह + अच् । अजादित्वात् टाप् । ) पृथिवी । इति त्रिकाण्डशेषः ॥
जगद्विनाशः, पुं, ( जगतां विनाशो ध्वंसः अखिलकार्य्यनाश इत्यर्थः यस्मिन् । ) युगान्तः । इति हलायुधः ॥ ( प्रलयकाले च अखिलकार्य्यशून्यत्वं यथाह मनुः । १ । ५२—५४ ।
“यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति ॥
तस्मिन् स्वपिति तु स्वस्थे कर्म्मात्मानः शरीरिणः ।
स्वकर्म्मभ्यो निवर्त्तन्ते मनश्च ग्लानिमृच्छति ॥
युगपत्तु प्रलीयन्ते तदा तस्मिन् महात्मनि ।
तदायं सर्व्वभूतात्मा सुखं स्वपिति निर्वृतः ॥” )
जगन्नाथः, पुं, (जगतां नाथ ईश्वरः । ) विष्णुः । इति हेमचन्द्रः ॥ (यथा, देवीभागवते ।१।४।३६।
“देवदेव ! जगन्नाथ ! भूतभव्यभवत्प्रभो ! ।
तपश्चरसि कस्मात्त्वं किं ध्यायसि जनार्द्दन ! ॥”)
पुरुषोत्तमक्षेत्रम् । यथा,
मुनय ऊचुः ।
“पुरुषोत्तमाख्यं सुमहत् क्षेत्रं परमपावनम् ।
यत्रास्ते दारवतनुः श्रीशो मानुषलीलया ॥
दर्शनान्मुक्तिदः साक्षात् सर्व्वतीर्थफलप्रदः ।
तन्नो विस्तरतो ब्रूहि तत् क्षेत्रं केन निर्म्मितम् ॥
ज्योतिःप्रकाशो भगवान् साक्षान्नारायणः प्रभुः ।
कथं दारुमयस्तस्मिन्नास्ते परमपूरुषः ॥

जैमिनिरुवाच ।
एतत् क्षेत्रवरस्यास्य वपुर्भूतं महात्मनः ।
स्वयं वपुष्मान् यत्रास्ते स्वनाम्नाख्यापितं हि तत् ॥
यथा चानुदिनं देवाः सिद्धाः ब्रह्मर्षयस्तथा ।
समर्चितुमिच्छायान्ति देवेशं न तथान्यतः ॥
अहो ! तत् परमं क्षेत्रं विस्तृतं दशयोजनैः ।
तीर्थराजस्य सलिलादुत्थितं वालुकाचितम् ॥
नीलाचलेन महता मध्यस्थेन विराजितम् ।
एकं स्तनमिवावन्याः सुदूरात् परिभावितम् ॥”
ब्रह्माणं प्रति विष्णुवाक्यम् ।
“सागरस्योत्तरे तीरे महानद्यास्तु दक्षिणे ।
स प्रदेशः पृथिव्यां हि सर्व्वतीर्थफलप्रदः ॥
एकाम्रकाननाद्यावद्दक्षिणोदधितीरभूः ।
पदात् पदात् श्रेष्ठतमः क्रमेण परिकीर्त्तितः ॥
सिन्धुतीरे च यो ब्रह्मन् ! राजते नीलपर्व्वतः ।
पृथिव्या गोपितं स्थानं तव चापि सुदुर्लभम् ॥
सुरासुराणां दुर्ज्ञेयं माययाच्छादितं मम ।
सर्व्वसङ्गपरित्यक्तस्तत्र तिष्ठामि देहभृत् ॥
क्षराक्षराभ्यां निःक्रान्तं क्षेत्रं मे पुरुषोत्तमम् ।
नीलाद्रेरन्तरभुवि कल्पन्यग्रोधमूलतः ॥
वारुण्यां दिशि यत् कुण्डं रौहिणं नाम विश्रुतम् ॥
तत्तीरे निवसन्तो मां पश्यन्तश्चर्म्मचक्षुषा ॥
तदम्भसा क्षीणपापा मम सायुज्यमाप्नुयुः ॥
एतेषु तीर्थेषु च यश्च दानयोः
पुण्यं यदुक्तं विमलात्मनो हि ।
अहर्निवासाल्लभते च सर्व्वं
निमेषवासात् खलु चाश्वमेधिकम् ॥

जैमिनिरुवाच ।
उदकार्णः समागत्य कृतकिञ्चायसोत्तमः ।
क्षारनीरकलम्पूर्णे तस्मिन् कुण्डे निमज्जितः ॥
विलोक्य माधवं नीलरत्नकान्तिं कृपानिधिम् ।
काकदेहं समुत्सृज्य मुहूर्त्तान्मुक्तः क्षितौ ॥
शङ्खचक्रगदापाणिस्तस्य पार्श्वे व्यवस्थितः ॥”
यमं प्रति लक्ष्मीवाक्यम् ।
“पञ्चक्रोशमिदं क्षेत्रं समुद्रान्तर्व्यवस्थितम् ।
द्विक्रोशं तीर्थराजस्य तटभूमौ सुनिर्म्मलम् ॥
सुवर्णवालुकाकीर्णं नीलपर्व्वतशोभितम् ।
योऽसौ विश्वेश्वरो देवः साक्षान्नारायणात्मकः ॥
संयम्य विषयग्रामं समुद्रतटमास्थितः ।
उपासितुं जगन्नाथं चतुःषष्ट्यात्मकः प्रभुः ॥
यमेश्वर इति ख्यातो यमसंयमनाशनः ।
यं दृष्ट्वा पूजयित्वा तु कोटिलिङ्गफलं लभेत् ॥
सीमा प्रतीची क्षेत्रस्य शङ्खाकारस्य सर्व्वगे ।
शङ्खाग्रे नीलकण्ठः स्यादेतत् क्रोशं सुदुर्लभम् ॥
परमं पावनं क्षेत्रं साक्षान्नारायणस्य वै ।
शङ्खस्योत्तरभागस्तु समुद्रोदकसंप्लुतः ॥
यत्सम्पर्कात् समुद्रोऽपि तीर्थराजत्वमागतः ।
यथायं भगवान्मुक्तिप्रदो दृष्टिपथं गतः ॥
तथेदं मरणात् क्षेत्रं निःश्रेयसकरं हि तत् ।
पुरा कल्पे यतिश्रेष्ठः .................
तच्छिरो दुःसहं शङ्करं ब्रह्मणः परिवभ्रमे ।
तत्रागतो यदा ब्रह्मकपालं परिमुक्तवान् ॥
कपालमोचनं तीर्थं द्वितीयावर्त्तसंस्थितम् ।
तस्य दक्षिणपार्श्वे तु मरणं भवमोचनम् ॥
तृतीयावर्त्तसीमायां शक्तिं मे विमलाह्वयाम् ।
जानीहि धर्म्मराज ! त्वं भुक्तिमुक्तिफलप्रदाम् ॥
नाभिदेशे स्थितं क्षेत्रम् अयं कुण्डं वटो विभुः ।
कपालमोचनं यावद्दक्षिणा प्रतिष्ठिता ॥
मध्यं शङ्खस्य जानीयात् सुगुप्तं चक्रपाणिना ।
तां दृष्ट्वा प्रणमेद्यस्तु भोगान् सोऽश्नाति शाश्वतान् ॥
सिन्धुराजस्य सलिलात् यावन्मूलं वटस्य वै ।
कीटपक्षिमनुष्याणां मरणान्मुक्तिदो मतः ॥
अन्तर्व्वेदी त्वियं पुण्या वाञ्छन्ति त्रिदशैरपि ।
अत्र स्थितान् हि पश्यन्ति सर्व्वे चक्राब्जधारिणः ॥
कामाख्या क्षेत्रपालश्च विमला चाम्बरा स्थिता ।
साक्षाद्ब्रह्मस्वरूपोऽसौ नृसिंहो दक्षिणे विभोः ॥
अन्तर्व्वेद्या रक्षणार्थं शक्तयोऽष्टौ प्रकल्पिताः ।
उग्रेण नाम्ना पूर्व्वमहं सर्व्वेण भाविता ॥
यदर्थं सा मया सृष्टा गौरी तस्याथ भामिनी ।
सर्व्वसौन्दर्य्यसर्व्वातिशयपुण्ये मे विनिर्गता ॥
तदा दृष्टा मया भद्रे ! वचनं मे प्रियं कुरु ।
अन्तर्व्वेदीं रक्ष मम परितस्त्वं स्वमूर्त्तिभिः ॥

याम्ये तिष्ठति मत्प्रीत्या अष्टधा दिक्षु संस्थिता ।
मङ्गला वटमूले तु पश्चिमे विमला तथा ।
मुखस्य पूर्व्वभागे तु संस्थिता सर्व्वमङ्गला ॥
अर्द्धाशनी तथा जम्बा कुवेरदिशि संस्थिता ।
कालरात्रिर्देविकस्या पूर्व्वस्यान्तु मरीचिका ॥
कालरात्र्यास्तथा पश्चात् चण्डरूपा व्यवस्थिता ।
रुद्राण्याश्चाष्टधा भेदं दृष्ट्वा यत्नोऽपि शङ्करः ।
आत्मानमष्टधा भित्त्वा उपास्ते परमेश्वरम् ॥
कपालमोचनं नाम क्षेत्रपालं यमेश्वरम् ।
मार्कण्डेयं तथेशानं विश्वेशं नीलकण्ठकम् ॥
वटमूले वटेशञ्च लिङ्गान्यष्टौ महेशितुः ।
यानि दृष्ट्वा तथा स्तुत्वा पूजयित्वा विमुच्यते ॥”
तत्र जगन्नाथस्याविर्भावकारणम् ।
जैमिनिरुवाच ।
“इन्द्रद्युम्नस्य नृपतेः क्षेत्रे श्रीपुरुषोत्तमे ।
जगदीशप्रसादाय पितामहनिदेशतः ॥
एकोनं शतमश्वःसंख्यामवाप पृथिवीपतेः ॥
सहस्रं हयमेधस्य यथावद्विधिचोदितम् ।
स्नात्वा यज्ञदिनात् पूर्व्वं या रात्रिरभवद्द्विजाः ! ॥
तस्यास्तुरीयप्रहरे ध्यायतो विष्णुमव्ययम् ।
ध्याने तस्मिन् ददर्शासौ महाभाग्यवशान्नृपः ॥
प्रत्यक्षमिव स श्वेतद्वीपं स्फाटिकनिर्म्मितम् ।
तन्मध्ये ददृशे देवं शङ्खचक्रगदाधरम् ॥
नीलजीमूतसङ्काशं वनमालाविभूषितम् ।
दक्षपार्श्वे स्थितं तस्य अनन्तं धरणीधरम् ॥
हलकाङ्कुशशङ्खाजस्फुरद्बाहुचतुष्टयम् ।
दक्षपार्श्वे स्थितां विष्णोर्लक्ष्मीं तां शुभलक्षणाम् ॥
वराभयाब्जहस्तां वै कुङ्कुमाभां सुलोचनाम् ।
ददर्श पद्मासनगां लावण्याम्बुधिपुत्त्रिकाम् ॥
पितामहञ्च ददृशे पुरतोऽस्य कृताञ्जलिम् ।
वामपार्श्वे स्थितं चक्रं सर्व्वज्ञानमयं विभोः ॥
ततः प्रबुद्धे स्नात्वा नृपतेर्यामिनीशेषिका ।
शङ्खैः स्तोत्रैर्दिव्यमृगभिर्वर्णक्रमसमुज्ज्वलैः ॥
दक्षिणे तटभूदेशे विश्वेश्वरसमीपतः ।
नियुक्ताः सेवका राज्ञा ससम्भ्रमसुपस्थिताः ॥
न्यवेदयन्तो नृपतिं कृताञ्जलिपुटा द्विजाः ।
देव ! दृष्टो महादारु तटभूमौ महोदधेः ॥
प्रविष्टाश्चसमुद्रान्तकल्लोलप्रवञ्चलकः ।
माञ्जिष्ठवर्णः सर्व्वत्र शङ्खचक्राङ्कितः प्लवन् ॥
न दृष्टपूर्व्वो दृष्टोऽयमत्यत्भुतकर्म्मनिर्भासुना ।
नियुक्तानां वचः श्रुत्वा राजा नारदमब्रवीत् ॥
तत् किं निमित्तं यद्दृष्टं तन्मैकं वदन्ति ते ।
नारदः प्रहसन् वाक्यमुवाच नृपसत्तमम् ॥
उपस्थितन्तु ते भाग्यं स्वप्ने यद्दृष्टवान् पुरा ।
श्वेतद्वीपे विश्वमूर्त्तिर्दृष्टो यो विष्णुरव्ययः ॥
तदङ्गस्खलितं लोम तरुत्वमुपपद्यते ।
तन्नाम्ना च वृक्षः सर्व्वलोकानां नयनातिथिः ॥
भविष्यति महाराज ! सर्व्वकल्मषनाशनः ।
समाप्यावभृथस्नानं तटान्ते सरितां पतेः ॥
उत्सवं सुमहत् कृत्वा कृतकौतुकमङ्गलम् ।
महावेद्यां स्थापयाम यथोक्तं तदकल्पितम् ॥
विचार्य्येत्थं तदा तुष्टौ तौ च नारदभूभुजौ ।
सुवर्च्चौ ततो यातौ यत्रासौ भगवान् द्रुमः ॥
पुनः पुनः प्रणम्यैनं दर्शनाशुनयनौ नृपः ।
द्विजैराहारयामास तरुं कल्लोललोहितम् ॥
स्रग्गन्धालेपनं दिव्यं महावेद्यां विनिक्षतुः ।
वचसा नारदस्यैनं पूजयामास पार्थिवः ॥
पूजावसाने पप्रच्छ नारदं मुनिसत्तमम् ।
कीदृशीं प्रतिमां विष्णोर्घटयिष्यति कः पुनः ॥
विचारयन्तौ तावित्थं यावन्नारदपार्थिवौ ।
अशरीरां ततो वाणीं शुश्राव चान्तरीक्षतः ॥
अपौरुषेयो भगवान् सन्निधारपथे स्थितः ।
सुगुप्तायां महावेद्यां स्वयं सोऽवतरिष्यति ॥
पञ्चदशतां दिनान्येव यावत् पञ्चदशानि वै ।
उपस्थितोऽयं यो वृद्धः शस्त्रपाणिस्तु वर्द्धकी ॥
एनमन्तः प्रवेश्यैव द्वारं बध्नन्तु यत्नतः ।
बहिर्वाद्यानि कुर्व्वन्तु यावत्तु घटना भवेत् ॥
श्रुतस्तद्घटनाशब्दो बाधिर्य्यान्ध्यत्वदायकः ।
नरके वसतिश्चैव कुर्य्यात् सन्ताननाशनम् ॥
नान्तः प्रवेशनं कुर्य्यान्न पश्येच्च कदाचन ।
नियुक्ताश्च प्रपश्येयुर्नाशो राज्ञश्च चैव हि ॥
राष्ट्रस्यापि महाभीतिरन्धता च युगे युगे ।
तच्छ्रुत्वा नारदाद्यास्ते यथोक्तं विष्णुना स्वयम् ॥
चिकीर्षन्ति तथा कर्त्तुं तत्रायातस्तु वर्द्धकी ।
प्रोवाच नृपतिं सोऽथ स्वप्ने दृष्टास्तु याश्च या ॥
ता एवाहं घटिष्यामि दारुणा दिव्यरूपिणा ।
इत्युक्त्वान्तर्द्दधे वेद्यां द्रुतवर्द्धकिरूपधृक् ॥
वचनार्थं मनुष्याणां साक्षान्नारायणो विभुः ।
ततः स पृथिवीपालस्तथा कृत्वान्तरीक्षगा ॥
यदुवाच गिरां देवी तत्तत् परिचचार च ।
निर्व्वबाह स्वयं देवः क्रमात् पञ्चदशे दिने ॥
चतुर्म्मूर्त्तिः स भगवान् यथा पूर्व्वं मयोदितः ।
दिव्यसिंहासनगतो बलभद्रसुदर्शनैः ॥
शङ्खचक्रगदापद्मलसद्बाहुर्जनार्द्दनः ।
हलं मुषलचक्राब्जं धारयन् पन्नगाकृतिः ॥
छत्त्रीकृतफणासप्तसुकुटोज्ज्वलकुण्डलः ।
सुभद्रा चारुवदना वराब्जाभयधारिणी ॥
लक्ष्मीः प्रादुर्भ्भूवेयं सर्व्वचैतन्यरूपिणी ।
सुदर्शनन्तु यच्चक्रं सदा विष्णोः करे स्थितम् ॥
शाखाग्रस्तम्भमध्यस्थं तद्रूपन्तु तुरीयकम् ॥ * ॥
निर्वृत्ते भगवद्रूप चतुर्द्धा दिव्यरूपिणी ॥
लोकानामुपकाराय पुनराहान्तरीक्षगा ।
पटैराच्छाद्य सुदृढं नृपते ! प्रतिमाश्चिमाः ॥
स्वं स्वं वर्णं प्रापयन्तु वर्णकैश्चित्रकर्म्मणा ।
अमूर्त्तास्वस्वरूपेण दृष्टाः पापाय चैतव ॥
गोपनीयाः प्रयत्नेन पङ्क्तिनिर्यासवल्कलैः ।
शिल्पिभिः कर्म्मकुशलैर्दृढमाच्छादयाच्यतः ॥
वर्षे वर्षे च संस्कार्य्या पूर्व्वसंस्कारमोचनात् ।
सती वल्कलयेयन्तु स तु दिव्यचिरन्तनः ॥
प्रमादाद्दूषयेद् तं लेपमपनीयेत काञ्चन ।
दुर्भिक्षं मरकं राष्ट्रे सन्ततिश्चास्य क्षीयते ॥
नैमित्तकाज्ञया राजन् ! कदाचिदपवारया ।
मनुष्येषु च राजेन्द्र ! दृष्टाः सुखेऽयमचैतव ॥
तस्मात् सुरक्षिता यत्नाः मङ्कुर्यपविलेपिताः ।
नीलाद्रौ कल्पवृक्षस्य वायव्ये सुरवल्लभाः ॥
प्रदेशे सुमहत्युच्चे प्रासादं सुरदुर्ल्लभम् ।
उत्तरे नरसिंहस्य सहस्रकलशोज्ज्वलम् ॥
कारयित्वा प्रतिष्ठाप्य तत्रैनं विधिवद्यजेत् ।
पुरा स्थितः पर्व्वतेऽस्मिन् योऽस्य चैवाति मानवम् ॥
नाम्ना विश्वावसुर्नाम शवरो द्वैपवीक्ष्यकः ।
तस्य सन्ततिरेषाश्च लेपसंस्कारकुर्व्वति ॥
नियुज्यतां महाराज ! भक्त्यास्तत्कृतवेदि च ।
ततः स नृपतिः श्रीमान् शिल्पशास्त्रविशारदान् ॥
वस्त्रकारैर्दानमानैश्च तोषयामास सादरम् ।
दिने दिने सुघटितः प्रासादो वद्धते द्विजाः ॥
परितः पूर्व्वमासस्तु शुक्लपक्षे यथा शशी ॥
नारद उवाच ।
प्रवर्षं बहु राजेन्द्र ! स्थित्वा चास्मिन् चिरं भुवि ।
आराधय जगन्नाथमुपचारैर्महोत्सवैः ।
पितामहं प्रष्टुकामो मत्वा चैत्रिकं विभोः ॥
उपदेक्ष्यति सोऽप्यस्य चाचाचान्ता मनीषया ।
उभौ तौ दिव्ययानेन जग्मतुर्मुनिभूभुजौ ॥
प्रदक्षिणीकृत्य हरिं लोकमस्तकमव्ययम् ।
दृष्ट्वा पितामहं दूरात् सदारं जग्मतुर्नृपः ॥
अमन्यत द्विजश्रेष्ठाः साक्षाद्दानवं हरिम् ।
धन्यैः धन्यैर्वरौ भूपः प्रणनाम कृताञ्जलिः ॥
स्तुवन् प्रणिपतन् भूमौ वाक्यस्खलितं प्रजन् ।
जानन्नपि हि तत् कार्य्यं मानवनृपसत्तमम्
उवाच परमप्रीत इन्द्रद्युम्नं पितामहः ।
किमर्थमागतोऽस्यत्र तद् ब्रूहि हृदयस्थितम् ॥
इन्द्रद्युम्न उवाच ।
आविर्बभूव भगवान् भूतभव्यभवत्प्रभुः ।
गत्वा देवं जगन्नाथं स्थापयिष्यसि च प्रभो ! ॥
ब्रह्मोवाच ।
त्वमग्रतोऽधरां गत्वा यावत् सज्जारम्भक्षिमत् ।
करिष्यसि महाभाग ! तावदेव व्रजाम्यहम् ॥
इन्द्रद्युम्नोऽपि हृष्टात्मा दृष्ट्वा ब्राह्मीं श्रियं द्विजाः ।
आजगाम भुवं विप्रा विधिना चानुमोदितः ॥
आगत्य च जगन्नाथं चिराद्युत्सुकमानसः ।
दण्डवत् प्रणनामासौ सरोमाञ्चकञ्चुकः ॥
ततः क्रमात् सन्ददृशे विमानाग्रं प्रजापतेः ।
सर्व्वहंसयुतैः स्वर्णैरनुयान्तं समन्ततः ॥
प्रणिपत्य जगन्नाथं त्रिः परीत्य पितामहः ।
आनन्दसिन्धुसंमग्नः सरोमाञ्चवपुः स्वयम् ॥
सन्तुष्टौ ततो ब्रह्मा कृतस्वस्त्ययनः स्वयम् ।
महर्षिभिर्नारदाद्यैश्च विद्वद्भिर्वापयेत्तथा ॥
प्रासादद्वारि रचिते रत्नमण्डपमध्यगे ।
वासयित्वाभिषेकाय सम्मुखादर्शमध्यगे ॥
सुवासिते रत्नकुम्भैस्तीर्थवार्य्युपसंस्कृतैः ।
युक्ताभ्यां श्रीपुरुषयोरभिषेकं पितामहः ॥
चकार भगवान् लोकसंग्रहार्थं द्विजोत्तमाः ! ।
ततोऽभ्यलङ्कृतान् देवान् गन्धमाल्योपशोभितान् ॥
नीराजयित्वा विधिवत् स स्वयं लोकभावनः ।
रत्नसिंहासने रम्ये स्थापयामास सत्वरः ॥
स्थापयित्वा जगन्नाथं दृष्ट्वा तस्य सुखस्मुखम् ।

दृश्यैवमनभ्यासायो वह्निमा योऽभिधीयते ॥”

इत्युभयूकवीजकल्पे: ॥

जतुकः, पुं, (जतुवत् इवोपयदादित्वात् टक् कन्म् ।) हिङ्गुनिर्यासतिलकः । इति हेमचन्द्रः ॥

जतु, क्ली, (जायते वृक्षादिभ्य इति । जन+“यजि-पाडिगमिमसिनिजनामिति ।” उणां १ । १८ । इति उः तोऽन्तादेशश्च ।) वृक्षनिर्यासविशेषः । गाला इति ला इति च भाषा ॥ तत्पर्य्यायः । राक्षा २ लाक्षा ३ याव: ४ अलक्तः ५ द्रुमामयः ६ । इत्यमरः ।२।६।१२५॥ रङ्गा ७ । इति रभसः ॥ कीटजा ८ क्रिमिजा ९ जतुका १० अलक्तका ११ गन्धाचिका १२ । इति रत्नमाला ॥ जतुकम् १३ यावकः १४ अलक्तकः १५ रक्तः १६ । इति शब्दरत्नावली ॥ पलङ्कषा १७ क्षमिः १८ वरवर्णिनी १९ । इति जटाधरः ॥ ( यथा, महाभारते । १ । १४७ । १३ ।

“शिवन् वीरस्य भवनमिदं सर्पिर्जतुविमिश्रितम् ॥”)

जतुकं, क्ली, ( जतु इव कायतीति । कै+कः । ) हिङ्गु । ( जतु एव । स्वार्थे कन् । ) लाक्षा । इति मेदिनी । के, ६१ ॥

जतुका, स्त्री, ( जतु इव आक्षया कायतीति । कै+“आतोऽनुपसर्गे कः ।” ३ । २ । ३ । इति कः । ) जनीनामगन्धद्रव्यम् । इत्यमरटीकायां भरतः ॥ चर्म्मचटिका । इति शब्दरत्नावली ॥ (यथा, वैद्यकचक्रपाणिसंग्रहे प्रकाराधिकारे ।

“जतुकाशकला तद्वद्रन्धैर्वा वत्सरोमभिः ।

अपकारहरो धूपो मन्त्रविद्वार्थशिशुभिः ॥”)

पर्पटी । इति भावप्रकाशः ॥ लताविशेषः । सा तु मालवे प्रसिद्धा । तस्याः पर्य्यायाः । जतुकारी २ जननी ३ चक्रवर्त्तिनी ४ तिर्य्यक्फला ५ निशान्धा ६ बहुपुत्री ७ सुपुत्रिका ८ राजवृक्षा ९ जनेष्टा १० कपिकच्छुफलोपमा ११ रञ्जनी १२ कृष्णवल्ली १३ भ्रमरी १४ लाक्षावल्लिका १५ विष्णुलिका १६ लघावल्ली १७ ग्रन्थिपर्णा १८ सुवर्च्चिका १९ तरुवल्ली २० दीर्घफला २१ । अस्या गुणाः । शिशिरत्वम् । तिक्तत्वम् । रक्तपित्तकफदाहत्वग्विषनाशित्वम् । रुचिकारित्वम् । दीपनत्वञ्च । इति राजनिर्घण्टः ॥ जन्तुकापि पाठः । निशान्धालक्षावृक्षयोरिवात्र क्रमेण निशाङ्का वृक्षदला च पाठः ॥ ( लाक्षा । तत्पर्य्याया यथा,—

“कीटजा क्रिमिजा लाक्षा जतुका च गन्धायिका ॥”

इति वैद्यकरत्नमालायाम् ॥)

जतुकारी, स्त्री, ( जतु करोतीति । जतु+कृ+“कर्म्मण्यण् ।” ३ । २ । १ । इत्यण् ततः स्त्रियां ङीप् । ) जतुकालता । इति राजनिर्घण्टः ॥ (गुणादयोऽस्या जतुकाशब्दे ज्ञातव्याः ॥)

जतुकृत्, स्त्री, ( जतु करोति उत्पादयतीति । कृ+क्विप् । जतोः कृदिति वा । ) जनीनामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १५३ ॥ (अस्याः पर्य्याया यथा,—

“पर्पटी रञ्जना कृष्णा जतुका जननी जनी ।

जतुकाशिवंशदा जतुकचक्रवर्त्तिनी ॥”

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

जतुकृष्णा, स्त्री, ( जतु इव कृष्णा । ) पर्पटी । इति भावप्रकाशः ॥

जतुनी, स्त्री, (जतु इव नयति जलाकारेण प्रापयति संश्लिष्टत्वमिति । नी+क्विप् । अस्याः संश्लेषात् प्रथमं जतुवद्रूपत्वात्तथात्वम् ।) चर्म्मचटिका । इति त्रिकाण्डशेषः ॥

जतुपुत्रकः, पुं, ( जतुनिर्म्मितः पुत्र इव । स्वार्थे कन् । ) पाशकगुटिका । नयः । इति त्रिकाण्डशेषः ॥

जतुमणिः, पुं, क्षुद्ररोगविशेषः । ( जडुल इति भाषा ॥ ) तस्य निदानं यथा,—

“समस्तुत्वग्रमरुजं मण्डलं कफरक्तजम् ।

सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिश्च सः ॥”

इति माधवकरः ॥

तच्चिकित्सा यथा—

“चर्म्मकीलं जतुमणिं मशकान् तिलकालकान् ।

उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥”

इति भावप्रकाशः ॥

जतुरसः, पुं, ( जतुनो रसः । ) अलक्तकः । इति राजनिर्घण्टः ॥ ( विवृतिरस्यालक्तकशब्दे ज्ञातव्या ॥)

जतूका, स्त्री, ( जतुका निपातनात् दीर्घः । ) जनीनामगन्धद्रव्यम् । इत्यमरः । २ । ४ । १५३ ॥ चर्म्मचटी । इति शब्दरत्नावली ॥

जत्रु, क्ली, ( जायते बाहुरस्मात् । जन्+“जनेरुक्च ।” उणां ४ । १०२ । इति रुक् नकारस्य तकारश्च ।) स्कन्धसन्धिः । इत्यमरः । २।६।७८॥ पाखुरा इति भाषा ॥ ( यथा, महाभारते । ३ । १७ । २२ ।

“तैः स विद्धो महाबाहुः प्रद्युम्नः समरे स्थितः ।

जत्रुदेशे भृशं वीरो ववासीदन्ये तदा ॥” )

जत्रुकं, क्ली, ( जत्रु एव । स्वार्थे कन् । ) जत्रु । इति शब्दरत्नावली ॥

जत्वश्मकं, क्ली, ( जतुरूपमश्मकम् ।) शिलाजतु । इति राजनिर्घण्टः ॥

जन, ई म य ङ जनौ । इति कविकल्पद्रुमः ॥ ( दिवां-आत्मं-अकं-सेट् । ) ई, जातः । म, जनयति । य ङ, जायते जन्यते । जनिर्जन्म । प्रादुर्भावे इति प्राञ्चः । प्रादुर्भावः स्फुटीभावः । प्राकाश्ये प्रादुराविः स्यादित्यमरः । बीजादङ्कुरो जायते पञ्चकाण्डादिभेदेन प्रकाशते इत्यर्थः । प्रादुर्भावोऽसदुत्पत्तिरिति केचित् । घटो जायते । इति दुर्गादासः ॥

जन, म लि र जनौ । इति कविकल्पद्रुमः ॥ (ह्वां-परं-अकं-सेट् ।) म, जनयति । लि, जजन्ति । इवैदिकः । इति दुर्गादासः ॥

जनः, पुं, ( जायते इति । जन+अच् । ) लोकः । ( यथा, महाभारते । १ । १४९ । ९ ।

“अथ प्रवाते तुमुले निशि सुप्ते जने तदा ।

तदुपादीपयत् भीमः शेते यत्र पुरोचनः ॥”)

महर्लोकादूर्द्ध्वलोकः । पामरः । इति मेदिनी । ने, ६ ॥ (असुरविशेषः । जनार्द्दन इति शब्ददर्शनात् ॥ )

जनकः, पुं, ( जनयतीति । जन+णिच्+ण्वुल् ।) पिता । राजभेदः । स तु मिथिलाधिपतिः । इति मेदिनी । के, ९० ॥ इक्ष्वाकुराजपुत्रो निमिर्वशिष्ठं त्यक्त्वा यज्ञं कृतवान् वशिष्ठस्तद्यज्ञस्थानमागत्य राजानं आह्वयामास राजा तदा निद्रित आसीत् । मुनिस्तु क्रोधात् त्वं विदेहो भव इत्युक्त्वा तमभिशशाप । ततः,—

“दृष्ट्वा विदेहं राजानमृषयः सर्व्व एव ते ।

तच्च ते याजयामासुर्यावद्दीक्षा मनीषिणः ॥

नरेन्द्रस्यापि तं देहमरक्षन् शिवपुङ्गवाः ।

गन्धैर्माल्यैश्च गन्धैश्च पूज्यमानं मुहुर्मुहुः ॥

ऋषयोऽपि महात्मानो निमिदेहं ममन्थिरे ।

अरणिस्तस्य देहात् मन्थानञ्चापि चक्रिरे ॥

मन्त्रहोमैर्महात्मानः पुत्रहेतोर्निमेस्तदा ।

अरण्यां मथ्यमानायां प्रादुर्भूतो यतश्च सः ॥

अतो मिथिरिति ख्यातो जननाज्जनकोऽभवत् ।

विदेहश्चाभवद्यस्मात् ख्यातस्तथा स महातपाः ॥

तस्माद्विदेहाः प्रोच्यन्ते सर्व्वे तद्वंशजा नृपाः ।

एवं विदेहराजस्तु पूर्व्वको जनकोऽभवत् ॥

मिथिर्नाम महावीर्य्यो येन सा मिथिलाभवत् ॥”

इति रामायणम् ॥

(ऋषिविशेषः । स तु वैद्यसन्देहभञ्जनग्रन्थस्य प्रणेता । यथा, ब्रह्मवैवर्त्ते । १ । १६ । १९ ।

“चकार जनको योगी वैद्यसन्देहभञ्जनम् ॥”

शम्बरासुरस्य पुत्रविशेषः । यथा, हरिवंशे । १६१ । ४४ ।

“श्रुत्वा तु शम्बराह्वानं सुतास्ते शम्बरस्य ह ।

सन्नद्धा निर्ययुर्हृष्टाः प्रद्युम्नवधकाङ्क्षया ॥”

इत्युपक्रम्याह ।

“सेनकश्चोऽतिसेनश्च सेनको जनकस्ततः ॥”)

उत्पादके, त्रि ॥ (यथा, ब्रह्मवैवर्त्ते ।१।१६।२८।

“जनकः सर्व्वरोगाणां दुर्व्वारो दारुणो ज्वरः ॥”)

जनकतनया, स्त्री, (जनकस्य विदेहनृपतेस्तनया ।) सीता । इति रामायणम् ॥ (यथा, मेघदूते ।१।

“यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु

स्निग्धच्छायातरुषु वसतिं रामगिर्य्याश्रमेषु ॥”)

जनकनन्दिनी, स्त्री, ( जनकस्य नन्दिनी ।) सीता । इति रामायणम् ॥

जनकसुता, स्त्री, ( जनकस्य सुता । ) सीता । इति रामायणम् ॥

जनकात्मजा, स्त्री, (जनकस्य आत्मजा । ) सीता । इति शब्दरत्नावली ॥ ( यथाह कश्चित् ।

“युष्मत्कृते खञ्जनगञ्जनाक्षि !

शिरो मदीयं यदि यातु यातु ।

नूनानि नूनं जनकात्मजार्थे

दशाननेनापि दशाननानि ॥”)

जनकारी, [ न् ], पुं, ( जनान् किरति आच्छादयति स्ववर्णेनेति । कॄ आच्छादने+णिनिः । ) अलक्तकः । इति राजनिर्घण्टः ॥

जनङ्गमः, पुं, ( जनैर्भ्यो गच्छतीति । "गमश्च ।" ३ । २ । ४७ । खच् मुमागमश्च ।) चाण्डालः । इत्यमरः । २।१०।१९ ॥ (यथा, माघे ।१५।१५ ।
"अवधीज्जनङ्गम इवैष
यदि हतवतो इदं मनु ।
धर्म्ममनुचितपुरश्चेति न
प्रतिमानमानयत्नु नितरां नृपोचिताम् ॥")

जनता, स्त्री, ( जनानां समूहः । जन+"ग्रामजनबन्धुभ्यस्तल् ।" ४ । २ । ४३ । इति तल् ।) जनसमूहः । इत्यमरः । ३ । ३ । ४२ ॥ (यथा, रघौ । ११ । ८२ ।
"तावुभावपि परस्परस्थितौ
वर्द्धमानपरिहीनतेजसौ ।
पश्यति स्म जनता दिनात्यये
पार्व्वणौ शशिदिवाकराविव ॥"* ॥
जनस्य भावः । ) जनत्वञ्च ॥

जननं, क्ली, (जायतेऽस्मिन्निति । जन+अधिकरणे ल्युट् । ) वंशः । ( जन+भावे ल्युट् । ) इति मेदिनी । ने, ६६ ॥ ( यथा, महानिर्व्वाणतन्त्रे । ३ । ५० ।
"जननमरणभीतिभ्रंशि सच्चित्स्वरूपं
सकलभुवनबीजं ब्रह्मचैतन्यमीडे ॥"
उत्पत्तिः । यथा, कुमारे । १ । ४२ ।
"अन्योन्यशोभाजननाद् बभूव
साधारणो भूषणभूष्यभावः ॥"
पुं, जनयति उत्पादयति जीवानिति । जन+णिच्+कर्त्तरि ल्युः । विष्णुः । यथा, महाभारते । १३ । १४९ । ११४ ।
"जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥"
"जननः जनयन् जनान् ।" इति तद्भाष्यम् ॥
जनयतीति । जनि+ल्युः । उत्पादके, त्रि । यथा, महाभारते । १ । ३६ । ३५ ।
"एकत्र चिरवासो हि न प्रीतिजननो भवेत् ॥")

जननिः, स्त्री, ( जनयति शाखसुखमिति । जन+णिच्+बाहुलकात् अनिः । ) जनीनामगन्धद्रव्यम् । इति शब्दरत्नावली ॥

जननी, स्त्री, (जनयतीति । जनि+बाहुलकादनिः । कृदिकारादिति वा ङीष् । यद्वा, जनजुटौ बहुलमिति ल्युट् टित्वात् ङीप् ।) माता । ( यथा, पञ्चतन्त्रे । १ । ३६ ।
"गिरतिगुरुं गरिमाणं
तेन जनन्याः स्मरन्ति विद्वांसः ।
यत् कमपि वहति गर्भं
महतामपि यो गुरुर्भवति ॥" )
दया । इति मेदिनी । ने, ६६ ॥ जनीनामगन्धद्रव्यम् । ( पर्य्याया यथा,—
"पर्पटी रञ्जना कृष्णा जतुका जननी जनी ।
जतुकृत्यग्निसंस्पर्शा जतुकाचक्रवर्त्तिनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
चर्म्मचटी । इति शब्दरत्नावली ॥ यूथिका । इति शब्दचन्द्रिका ॥ कटुका । मञ्जिष्ठा । अलक्तकः । जटामांसी । इति राजनिर्घण्टः ॥

जनपदः, पुं, ( जनस्य लोकस्य पदं स्थानमत्र । जनाः पद्यन्ते गच्छन्त्यत्र वा । ) देशः । ( यथा, चाणक्यशतके । ३१ ।
"त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥"
जनपदनामानि महाभारते भीष्मपर्व्वणि नवमाध्याये कथितानि अतस्तत्रैव विशेषतो द्रष्टव्यानि ॥ )
जनः । इति मेदिनी । दे, ४८ ॥

जनप्रवादः, पुं, ( जनेषु लोकेषु प्रवादोऽपवादः ।) लोकापवादः । तत्पर्य्यायः । कौलीनम् २ विगानम् ३ वचनीयता ४ । इति हेमचन्द्रः । ।२।१८४ ॥ ( यथा, महाभारते । १२।७२।१६ ।
"जनप्रवादान् सुबहून् शृण्वन्नपि नराधिपः ।
श्रिया च धर्म्मसंयोगात् पार्थो मूर्खमिवात्
पुनः ॥")

जनप्रियः, पुं, ( जनानां प्रियः । ) धान्यकम् । शोभाञ्जनवृक्षः । इति राजनिर्घण्टः ॥ (लोकप्रिये, त्रि ॥ )

जनमेजयः, पुं, (जनान् शत्रुजनान् एजयति प्रतापैः कम्पयतीति । एजृ कम्पने+णिच्+"एजेः खश् ।"३।२।२८ । इति खश् ततो मुमागमः ।) परीक्षितराजपुत्रः । तत्पर्य्यायः । राजर्षिः २ पारीक्षितः ३ । इति त्रिकाण्डशेषः ॥ ( यथा, देवीभागवते । २ । ११ । ६ ।
"पौरजानपदा लोकाश्चक्रुस्तं नृपतिं शिशुम् ।
जनमेजयनामानं राजलक्षणसंयुतम् ॥"
जन्मेजय इति पाठोऽपि क्वचित् दृश्यते । तन्निरुक्तिस्तच्छब्दे द्रष्टव्या ॥
अयं हि चतुरशीतिवर्षाणि राज्यं कृतवान् । तत्र अश्वमेधादिकं बहुयज्ञं कृत्वा पितृवधामर्षात् सर्पसत्रं चकार । अन्तेवासी जरत्कारुपुत्रेण आस्तीकेन प्रार्थितः सर्पसत्रात् विरराम ततश्चित्तप्रशमनार्थं भारतादिकं श्रुतवान् । वृत्तान्तश्चैषः क्रमशः प्रदर्श्यते । यथा, राजावल्यां १ परिच्छेदे ।
"पारीक्षितस्तदा राजा नीतिमान्नीतिभीरुतः ।
पृथिवीं पालयामास निवसन् गजसाह्वये ।
कृत्वा पितृवधामर्षो सर्पेष्टिं सुनिभिः समम् ।
नाशयामास सर्पाणां कुलानि कुलनायकः ॥
हयमेधसहस्राणि सम्भारैर्बहुविस्तरैः ।
ब्रह्महत्याभवत्तत्र यागेऽकालकृते तदा ॥
तत् पापमभवत् तस्य दारुणं पृथिवीपतेः ।
वैशम्पायनतो वेदव्यासशिष्यात्तपोनिधेः ।
श्रुत्वा भारतमाख्यानं तत्पापात् मुक्तिमाप सः ।
चतुरशीतिवर्षाणि कृत्वा राज्यं सुनिर्म्मलम् ।
शतानीकं सुतं राज्ये संस्थाप्यैव दिवं गतः ॥"
सोमश्रवसञ्चैषमसौ पौरहित्याय वृतवान् ।
तत्कथा यथा, महाभारते । १।३।१—२० ।
"जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते । तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति । तेषु तत्सत्रमुपासीनेष्वागच्छत् सारमेयः । स जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत् । तं माता रोरूयमाणमुवाच किं रोदिषि केनास्यभिहत इति । स एवमुक्तो मातरं प्रत्युवाच जनमेजयस्य भ्रातृभिरभिहतोऽस्मीति । तं माता प्रत्युवाच व्यक्तं त्वया तत्रापराद्धं येनास्यभिहत इति । स तां पुनरुवाच नापराध्यामि किञ्चिन्नावेक्षे हवींषि नावलिह इति । तच्छ्रुत्वा तस्य माता सरमा पुत्रशोकार्त्ता तत् सत्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिर्दीर्घसत्रमास्ते । स तया क्रुद्धया तत्रोक्तोऽयं मे पुत्रो न किञ्चिदपराध्यति नावेक्षते हवींषि नावलेढि किमर्थमभिहत इति । न किञ्चिदुक्तवन्तस्ते सा तानुवाच यस्मादयमभिहतोऽनपकारी तस्माद्दृष्टं त्वां भयमागमिष्यतीति । जनमेजय एवमुक्तो देवशुन्या सरमया भृशं सम्भ्रान्तो विषण्णश्चासीत् । स तस्मिन् सत्रे समाप्ते हास्तिनपुरं प्रत्येत्य पुरोहितमनुरूपमन्विच्छमानः परं यत्नमकरोत् यो मे पापकृत्यां शमयेदिति । स कदाचिन्मृगयां गतः पारीक्षितो जनमेजयः कस्मिंश्चित् स्वविषये आश्रममपश्यत् । तत्र कश्चिदृषिरासाञ्चक्रे श्रुतश्रवा नाम तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम । तस्य तं पुत्रमभिगम्य जनमेजयः पारीक्षितः पौरहित्याय वव्रे । स नमस्कृत्य तमृषिमुवाच भगवन्नयं तव पुत्रो मम पुरोहितोऽस्त्विति । स एवमुक्तः प्रत्युवाच जनमेजयं भो जनमेजय । पुत्रोऽयं मम सर्प्यां जातो महातपस्वी स्वाध्यायसम्पन्नो मत्तपोवीर्य्यसम्भृतो मच्छुक्रपीतवत्यास्तस्याः कुक्षौ जातः । समर्थोऽयं भवतः सर्व्वाः पापकृत्याः शमयितुमन्तरेण महादेवकृत्याम् । अस्य त्वेकमुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः कञ्चिदर्थमभियाचेत्तं तस्मै दद्यादयं यद्येतदुत्सहसे ततो नयस्वैनमिति । तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच भगवंस्तत्तथा भविष्यतीति ॥"* ॥
अस्य सर्पसत्रविवरणकथा यथा देवीभागवते । २ । ११ । ४६—६० ।
"इति तस्य वचः श्रुत्वा राजा जन्मेजयस्तदा ।
नैश्वास्यमश्रुपातञ्च चकारातीवदुःखितः ॥
धिक्कामस्तु सुहृद्वैरैर्मृत्युमानकरस्य वै ।
पिता यस्य गतिं घोरां प्राप्तः पन्नगपीडितः ॥
अद्याहं मखमारभ्य करोम्यपचितिं पितुः ।
हुत्वा सर्पानसंदिग्धो दीप्यमाने विभावसौ ॥
आहूय मन्त्रिणः सर्व्वान् राजा वचनमब्रवीत् ।
कुर्व्वन्तु यज्ञसम्भारं यथार्हं मन्त्रिसत्तमाः ! ॥
गङ्गातीरे शुभां भूमिं मापयित्वा द्विजोत्तमैः ।
कुर्व्वन्तु मण्डपं रम्याः शतस्तम्भं मनोहरम् ॥
वेदी यज्ञस्य कर्त्तव्या ममात्र सचिवाः स्फुटु ।
तदङ्गत्वे विधियो वै सर्पसत्रः सुविस्तरः ॥
तक्षकस्तु पशुस्तत्र होतोत्तङ्को महामुनिः ।
शीघ्रमाहूयतां विप्राः सर्व्वज्ञा वेदपारगाः ॥
मन्त्रिणस्तु तदा चक्रुर्भूपवाक्याद्विचक्षणाः ।

तस्य यज्ञं करिष्यामि यज्ञं तस्य विलुप्यताम् ॥
इत्येते पूर्व्वकाले तु ययाति तपसो ऽस्त: ।
इत्थं शक्तिभवात्सोऽहं नाथ दास्यामीति चाब्रवीत् ॥
भवतीत्वं अमान्नाश्च नावस्येद् बहुविधेन च ।
दरामयमसक्ष्यं निर्भयो भव मद्भय ! ॥
तमिनयतरर्थं श्रुत्वा सुविद्वांताभयं तथा ।
उत्तस्थौ ऽश्वबुद्धिय: शीर्षं ज्ञात्वा निमज्जनम् ॥
खुलस्वरा तपकेन वायावरक्षणीक्षम: ।
आस्तीको नाम धर्म्मात्मा जरत्कारसुतो मुनि:॥
तदागतं सुमेर्वादिसुराय जनमेजयम् ।
राजा तमर्च्चयामास दृष्ट्वा बालं सुपण्डितम् ॥”)
जनयित्री, स्त्री, (जनयितृ+ङीप् ।) माता । इत्य-
मर: । २ । ६ । २८ ॥ ( यथा, रघु: । १० । ७० ।
“कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान् ।
जनयित्रीमलञ्चक्रे य: प्रश्रय इव श्रियम् ॥”)
जनरव:, पुं, ( जनेषु लोकेषु रव: प्रवाद: ।) लोक-
वाद: । यथाह कश्चित्कविः ।
“यदीयवचसो भवति वितथो नापि मद्वता
तथाप्यपवादो हरति महिमानं जनरव: ॥”
जनलोक:, पुं, ( जन एव लोक: । ) महर्लोको-
परिस्थभुवनम् । यथा,—
“अयं स हि महर्लोक: स्वर्लोकात् परमाद्भुत: ।
कल्पायुषो वसन्त्यत्र तपसा धुतकल्मषा: ॥
इत्थं कथां कथयतोर्भगवद्गणयो: प्रिये ! ।
क्षणार्द्धेन विमानन्तज्जनलोकं जगाम ताम् ॥
निवसन्त्यमला यत्र मानसा ब्रह्मण: सुता: ।
सनन्दनाद्या योगीन्द्रा: सर्व्वे ते चूर्द्धरेतस: ॥
अन्ये तु योगिनो ये वै शश्वद्ब्रह्मचारिण: ।
सर्व्वद्वन्द्वविनिर्म्मुक्तास्ते वसन्त्यत्र निर्म्मला: ॥
महर्लोक: स्थितश्चूर्द्ध्वमेककोटिप्रमाणत: ।
कोटिद्वयेतिसंख्यातो जनो भूर्लोकतो जने: ॥”
इति स्कान्दे काशीखण्डम् ॥
जनवल्लभ:, पुं, ( जनानां लोकानां वल्लभ: प्रिय: ।)
श्वेतरोहितवृक्ष: । इति राजनिर्घण्ट: ॥ लोक-
प्रिये, त्रि ॥
जनवाद:, पुं, (जनेषु लोकेषु वादोऽपवाद: । ) जन-
प्रवाद: । इति हलायुध: ॥ ( यथा, आर्य्यासप्त-
शत्याम् । ४१८ ।
“भक्तपदस्थेऽपि गिरिशे स्नेहमयी स्वस्थितेन
सुभगापि ।
मोचयति जनवादो यदेवगिरिशस्तदुहितेति ॥”)
जनश्रुति:, स्त्री, ( जनेभ्य: श्रुति: श्रवणम् । ) सत्य-
मसत्यं वा लोकप्रवाद: । तत्पर्य्याय: । किंव-
दन्ती २ । इत्यमर: । १ । ६ । ७ ॥ ( यथा,
आर्य्यासप्तशत्याम् । ३६५ ।
“पुंसां दर्शय सुन्दरि ! सुदेन्दुमीषत्प्रयामपाङ्गस्य ।
आयाजित इति कृत्वा जनश्रुतिर्मे यशो भवतु ॥”)
जनस्थानं, क्ली, ( जनस्य स्थानं भूभाग: । ) दण्ड-
कारण्यम् । इति जटाधर: ॥ दण्डकारण्य-
समीपस्थानविशेष: । यथा । इक्ष्वाकुराजपुत्रो
दण्ड: शुक्राचार्य्यकन्यामरजां बलात्कृत्वा
मैथुनं कृतवान् च तन्निशम्य श्रुत्वा राजानं
शशाप । यथा,—
“समराजेन राजासौ वञ्चनपरायण: ।
पापकर्म्मसमाचारो वधं प्राप्स्यति दुर्मति: ॥
सर्व्वसत्त्वानि यानीह जङ्गमानि स्थिराणि च ।
सर्व्वेषां पांशुवर्षेण क्षय: क्षिप्रं भविष्यति ॥
दण्डस्य विषयो यावत् तावत् समन्ताद्योजनम् ।
पांशुभूतमिवाकस्मात् सप्तरात्राद्भविष्यति ॥
इत्युक्त्वा क्रोधसन्तप्तस्तदाश्रमनिवासिनम् ।
जनं जनपदस्यान्ते स्थीयतामित्यथोचत ॥
सप्तरात्रेण वाद्भूत: स चापि भस्मतीजसा ।
तस्य दण्डस्य विषयो विन्ध्यशैलस्य सानुषु ॥
तदाप्रभृति काकुत्स्थ ! दण्डकारण्यमुच्यते ।
तपस्विन: स्थिता यत्र तज्जनस्थानमुच्यते ॥”
इति रामायणम् ॥
( अत्र रावणस्य खरदूषणप्रभृतीनि सैन्या-
न्यासन् । यथा, रामायणे । १ । १ । ४६ ।
“तेन तत्रैव वसता जनस्थाननिवासिनी ।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥”
“जनस्थानं नाम दण्डकारण्ये रावणबलनिवेश-
स्थानम् ।” इति तट्टीकायां रामानुज: ॥ )
जना, स्त्री, ( जननमिति । जन+बाहुलकात्
अङ् । ) उत्पत्ति: । इति मुग्धबोधम् ॥
जनान्त:, पुं, ( जनस्य प्रदेशस्य अन्त: । ) देश: ।
इति धनञ्जय: । सेवा इति पारस्यभाषा ॥
जनान्तिकम्, क्ली, अप्रकाश: । इति त्रिकाण्ड-
शेष: ॥ (एतल्लक्षणं यथा, साहित्यदर्पणे ।
“त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्ति-
कम् ॥”
एतत्तु यथोक्तमप्रकाशकथनम् । नाटके एव
अस्य भूरिप्रयोगो दृश्यते ॥ जनस्य अन्तिकम् ।
जनसमीपञ्च ॥ )
जनार्द्दन:, पुं, विष्णु: । इत्यमर: । १ । १ । १८ ॥
तन्नामव्युत्पत्तिर्यथा । “समुद्रान्तवासिनो जन-
नाम्नोऽसुरान् अर्द्दितवान् जनार्द्दन: । अर्द्द
वधे अर्द्दकश्च नन्द्यादित्वादन: । किंवा जनै-
र्लोकैरर्द्द्यते याच्यते पुरुषार्थानसौ जनार्द्दन: ।
अर्द्द यातनागतियाचने कर्म्मणि अनट् । किंवा
जननं जन: भावे घञ् । जनं जन्म अर्द्दयति
हन्ति भक्तस्य मुक्तिदत्वादिति जनार्द्दन: ।
किंवा जनान् लोकान् अर्द्दति हररूपेण
संहारकत्वादिति जनार्द्दन: । किंवा जनयति
उत्पादयति लोकान् ब्रह्मरूपेण सृष्टिकर्त्तृत्वा-
दिति जन: जनेर्ण्यन्तात् पचाद्यच् । अर्द्दति
हन्ति लोकान् हररूपेण संहारकारित्वादिति
अर्द्दन: जनश्चासौ अर्द्दनश्चेति जनार्द्दन: ।
किंवा जनान् लोकान् अर्द्दति गच्छति प्राप्नोति
रक्षार्थं पालकत्वादिति जनार्द्दन: ।” इत्यमर-
टीकायां भरत: ॥ * ॥ गयायां तस्य हस्ते
जीवितस्य पिण्डदानविधिर्यथा,—
“जनार्द्दनो भस्मकूटे तस्य हस्ते तु पिण्डद: ।
आत्मनोऽप्यथवान्येषां सव्येनैव तिलैर्विना ॥
जीवता दधिसंमिश्रं सर्व्वे ते विष्णुलोकगा: ।
अस्तु पिण्डो मया दत्तस्तव हस्ते जनार्द्दन ! ॥
परलोकं गते मह्यं त्वया देयस्त्वमेव हि पिण्डो मे प्रभो !।
एष पिण्डो मया दत्तस्तव हस्ते जनार्द्दन ! ॥
अन्तकाले गते मह्यं त्वया देयो गयाशिरे ।
जनार्द्दन ! नमस्तुभ्यं नमस्ते पितृमोक्षद ! ॥
पितृपाद नमस्तुभ्यं नमस्ते पितृरूपिणे ।
गयायां पितृरूपेण स्वयमेव जनार्द्दन: ॥
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ।
नमस्ते पुण्डरीकाक्ष । ऋणत्रयविमोचन ! ॥
लक्ष्मीकान्त ! नमस्तेऽस्तु पितृमोक्षप्रदो भव ।
वामजानु च सम्पात्य नत्वा भीमो जनार्द्दनम् ॥
श्राद्धं सपिण्डकं कृत्वा आत्मभिर्ब्रह्मलोकभाक् ।
पितृभि: सह धर्म्मात्मा कुलानाञ्च शतेन च ॥
शिलायां व्यक्तरूपेण व्यक्ताव्यक्तात्मना स्थित: ।
लक्ष्मीशो विबुधै: सार्द्धं तस्मादेवमयी शिला ॥”
इति श्रीवायुपुराणे श्वेतवाराहकल्पे गया-
माहात्म्ये ४ अध्याय: ॥ * ॥ शालग्रामशिला-
विशेष: । तल्लक्षणं यथा,—
“शङ्खचक्रगदाजगद् जनार्द्दनमितो नम: ।
उपेन्द्रं गदिनं साक्षिपद्मशङ्ख ! नमोऽस्तु ते ॥”
इति पाद्मे पातालखण्डे १० अध्याय: ॥
“आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ।
ज्ञानञ्च शङ्करादिच्छेन्मुक्तिमिच्छेज्जनार्द्दनात् ॥”
इति कर्म्मलोचनम् ॥
जनाशन:,पुं, ( जनानश्नाति भक्षयतीति । अश+
ल्यु: । ) वृक: । इति राजनिर्घण्ट: ॥
जनाश्रय:,पुं,(जनानां लोकानामाश्रय: ।) मण्डप: ।
इत्यमर: । २ । २ । ९ ॥
जनि:, स्त्री, ( जननमिति । जन+“जनिघसि-
भ्यामिण् ।” उणां ४ । १२९ । इति इण् ।
जनिवध्योश्चेति वृद्धिनिषेध: । ) उत्पत्ति: ।
इत्यमर: । १ । ४ । ३० ॥ ( यथा, हरि-
वंशे । २०८ । ४० ।
“वनस्पत्योषधीश्चैव युगपत् प्रतिपद्यसे ।
बालभावाय वसुधां पश्चि पश्चि जनिस्तव ॥”
जायते यस्याम् । जन+आधारे इण् ।) नारी ।
माता । इति शब्दरत्नावली ॥ ( जायते सुख-
मनयेति । करणे इण् । ) जनीनामगन्धद्रव्यम् ।
इत्यमरटीकायां रायमुकुट: ॥
जनिका, स्त्री, ( जायते वंशो यस्यामिति जनि: ।
तत: स्वार्थे कन् टाप् च । ) वधू । इति शब्द-
रत्नावली ॥ (जनिशब्दार्थ: ॥) जननकर्त्री च ॥
जनितं,त्रि, ( जन्यते स्मेति । जन+णिच्+क्त: ।)
उत्पादितम् । यथा,—
“सैनापत्ये भवदिभाननदानवारि-
वासेन यस्य जनिता सुरभी रणश्री: ॥”
इति नैषधम् ॥
( यथा च हरिवंशे । १६१ । ३१ ।
“अतोऽहं कामयामि त्वां नहि त्वं जनितो मया ।
रूपन्ते सौम्य ! पश्यन्ती सीदामि भृशदुर्म्मना ॥”)

जनिता [ ऋ ] पुं, (जनयतीति । जन+णिच्+तृच् । "जनिता मन्त्रे ।" ६ । ४ । ५३ । इति निपातनात् णिलोप: । ) पिता । इति शब्दरत्नावली ॥ ( यथा, ऋग्वेदे । १ । १२९ । ११ ।

"अधा हि त्वा जनिता जीजनद्वसो

रक्षोहणं त्वा जीजनद्वसो ॥"

क्वचित् लौकिकेऽपि दृश्यते । यथा, पञ्चतन्त्रे ।२।६।

"अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते ।

जनितारमपि त्यक्त्वा निःस्वं गच्छति दूरत: ॥")

जनित्री, स्त्री, ( जनितृ+स्त्रियां ङीप् । ) माता । इति शब्दरत्नावली ॥ (यथा, ऋग्वेदे ।३।४८।२।

"तं ते माता परि योषा जनित्री

मह: पितुर्दम आसिञ्चदग्रे ॥"

यथाच शङ्कराचार्यकृतविष्णुस्तोत्रे ९ ।

"या सूते सत्त्वजालं सकलमपि सदा सन्निधानेन पुंसो

धत्ते या तत्त्वयोगाच्चरमचरमिदं भूतये भूतजातम् ।

धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्वशक्तिं विधात्रीं

विष्णोर्विश्वात्मनस्तां विपुलगुणमयीं प्राणनाथां प्रणौमि ॥")

जनित्व:, पुं, ( जायतेऽस्मादिति । जन+"जनिदाच्युसिति ।" उणां ४ । १०४ । इति इत्वन् ।) पिता । इत्युणादिकोष: ॥

जनित्वा, स्त्री, ( जायतेऽस्या: । जन+इत्वन् । अजादित्वात् टाप् ।) माता । इत्युणादिकोष: ॥

जनिनीलिका, स्त्री, ( जन्या उत्पन्ना नीलिका ।) महानीली । इति राजनिर्घण्ट: ॥ (महानीलीशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

जनिमा, [ न् ] पुं, ( जन्यते इति । जन+"जनिमृङ्भ्यामिमनिन् ।" उणां ४ । १४८ । इति इमनिन् । ) जन्म । इत्युणादिकोष: ॥

जनी, स्त्री, ( जायते सन्ततिर्यस्यामिति । जन+"अनिवसिभ्यामिण् ।" उणां ४ ।१२९ । इतीण् जनिवध्योश्चेति वृद्धिनिषेध: । तत: कृदिकारादिति ङीष् ।) सीमन्तिनी । वधू: ( जन+भावे इण् ।) उत्पत्ति: । ( जायते आरोग्यमनया । करणे इण् । ) ओषधीभित् । इति मेदिनी । ने, ६ ॥ शेषस्य पर्य्याय: । जतूका २ रजनी ३ जतुकृत् ४ चक्रवर्त्तिनी ५ संस्पर्शा ६ । इत्यमर: । २ । ४ । १५३ ॥ जतुका ७ जनि: ८ जननी ९ । इति भरत: ॥ राजनिर्घण्टोक्तगुणपर्य्यायौ जतुकाशब्दे द्रष्टव्यौ

जनु: [ स् ] स्त्री, ( जन्यते इति । जन+"जनेरुसि: ।" उणां । २ । ११६ । इति उसि: ॥) जन्म । इत्यमर: । १ । ४ । ३० ॥ ( यथा, ऋग्वेदे । ४ । १७ । २० ।

"त्वं राजा जनुषां धेह्यस्मे अधिश्रवो

माहिनं यज्जरित्रे ॥")

जनु:, स्त्री, ( जन्यते इति । जनीत्यादि जनी+बाहुलकात् उ: । ) जन्म । इत्युणादिकोष: ॥

जनू:, स्त्री, ( जनु+स्त्रियां ऊङ् । ) जन्म । इति शब्दरत्नावली ॥

जनेष्ट:, पुं, ( जनानामिष्ट: प्रिय: । ) शुक्लरक्तच: । इति राजनिर्घण्ट: ॥

जनेष्टा, स्त्री, ( जनानामिष्टा प्रिया । ) जतुका । वृद्धिनामौषधि: । जातीपुष्पम् । हरिद्रा । इति राजनिर्घण्ट: ॥

जनोदाहरणं, क्ली, (जनैरुदाह्रियते कथ्यते इति । उत्+आ+हृ+कर्म्मणि ल्युट् ।) यश: । इति धनञ्जय: ॥

जनौ:, पुं, ( जनानवति रक्षतीति । अव+क्विप् । "ज्वरत्वरस्रिव्यविमवामुपधायाश्च ।" ६ । ४ । २० । इति ऊठ् ततो वृद्धि: । ) जनरक्षक: । इति मुग्धबोधम् ॥

जन्तु:, पुं, ( जायते उद्भवतीति । जन+"कमिमनिजनीति ।" उणां । १ । ७२ । इति तु: । ) प्राणी । इत्यमर: । १ । ४ । ३० ॥ ( यथा, मनौ । ४ । २४० ।

"एक: प्रजायते जन्तुरेक एव प्रलीयते ।

एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥"

मनुष्ये बहुवचनान्त: । इति निघण्टु: ॥ यथा, ऋग्वेदे । १ । ९४ । ५ ।

"विश्वां गोपा अस्य चरन्ति जन्तवो

द्विपच्च यदुत चतुष्पदक्तुभि: ॥"

सोमकस्य राज्ञ: पुत्त्रविशेष: । अस्य विवरणमुक्तं यथा, महाभारते । ३ । १२७—१२८ अध्याययो: ।

"युधिष्ठिरासीन्नृपति: सोमको नाम धार्म्मिक: ।

तस्य भार्य्याशतं राजन् ! सदृशीनामभूत्तदा ॥

स वै यत्नेन महता तासु पुत्त्रं महीपति: ।

कञ्चिन्नासादयामास कालेन महता ह्यपि ॥

कदाचित्तस्य वृद्धस्य घटमानस्य यत्नत: ।

जन्तुर्नाम सुतस्तस्मिन् स्त्रीशते समजायत ॥

तं जातं मातर: सर्व्वा: परिवार्य्य समासते ।

सततं पृष्ठत: कृत्वा कामभोगान् विशाम्पते ! ॥

तत: पिपीलिका जन्तुं कदाचिददशत् स्फिचि ।

स दष्टो व्यनदन्नादं तेन दु:खेन बालक: ॥

ततस्ता मातर: सर्व्वा: प्राक्रोशन् भृशदु:खिता: ।

परिवार्य्य जन्तुं सहिता: स शब्दस्तुमुलोऽभवत् ॥

तमार्त्तनादं सहसा शुश्राव स महीपति: ।

अमात्यपर्षदो मध्ये उपविष्ट: सहर्त्विजा ॥

तत: प्रस्थापयामास किमेतदिति पार्थिव: ।

तस्मै क्षत्ता यथावृत्तमाचचक्षे सुतं प्रति ॥

त्वरमाण: स चोत्थाय सोमक: सह मन्त्रिभि: ।

प्रविश्यान्त:पुरं पुत्त्रमाश्वासयदरिन्दम: ॥

सान्त्वयित्वा तु तं पुत्त्रं निष्क्रम्यान्त:पुरान्नृप: ।

ऋत्विजा सहितो राजन् ! सहामात्य उपाविशत् ॥

सोमक उवाच ।

धिगस्त्विहैकपुत्त्रत्वमपुत्त्रत्वं वरं भवेत् ।

नित्यातुरत्वाद्भूतानां शोक एवैकपुत्त्रता ॥

इदं भार्य्याशतं ब्रह्मन् ! परीक्ष्य सदृशं प्रभो ! ।

पुत्त्रार्थिना मया वोढं न तासां विद्यते प्रजा ॥

एक: कथञ्चिदुत्पन्न: पुत्त्रो जन्तुरयं मम ।

यतमानासु सर्व्वासु किन्नु दु:खमत: परम् ॥

वयश्च समतीतं मे सभार्य्यस्य द्विजोत्तम ! ।

आसां प्राणा: समायत्ता मम चात्रैकपुत्त्रके ॥

स्यान्नु कर्म्म तथा युक्तं येन पुत्त्रशतं भवेत् ।

महता लघुना वापि कर्म्मणा दुष्करेण वा ॥

ऋत्विगुवाच ।

अस्ति चैतादृशं कर्म्म येन पुत्त्रशतं भवेत् ।

यदि शक्नोषि तत् कर्त्तुमथ वक्ष्यामि सोमक ! ॥

सोमक उवाच ।

कार्य्यं वा यदि वाकार्य्यं येन पुत्त्रशतं भवेत् ।

कृतमेवेति तद्विद्धि भगवन् ! प्रब्रवीतु मे ॥

ऋत्विगुवाच ।

यजस्व जन्तुना राजंस्त्वं मया वितते क्रतौ ।

तत: पुत्त्रशतं श्रीमद्भविष्यत्यचिरेण ते ॥

वपायां हूयमानायां धूममाघ्राय मातर: ।

ततस्ता: सुमहावीर्य्यान् जनयिष्यन्ति ते सुतान् ।

तस्यामेव तु ते जन्तुर्भविता पुनरात्मज: ।

उत्तरे चास्य सौवर्णं लक्ष्म पार्श्वे भविष्यति ॥

तत: स याजयामास सोमकं तेन जन्तुना ।

मातरस्तु बलात् पुत्त्रमपाकर्षु: कृपान्विता: ॥

हा हता: स्मेति वाशन्त्यस्तीव्रशोकसमाहता: ।

रुदत्य: करुणञ्चापि गृहीत्वा दक्षिणे करे ॥

सव्ये पाणौ गृहीत्वा तु याजकोऽपि स्म कर्षति ।

कुररीणामिवार्त्तानां समाकृष्य तु तं सुतम् ॥

विशस्य चैनं विधिना वपामस्य जुहाव स: ।

वपायां हूयमानायां गन्धमाघ्राय मातर: ॥

आर्त्ता निपेतु: सहसा पृथिव्यां कुरुनन्दन ! ॥

सर्व्वाश्च गर्भानलभंस्ततस्ता: परमाङ्गना: ॥

ततो दशसु मासेषु सोमकस्य विशाम्पते: ।

जज्ञे पुत्त्रशतं पूर्णं तासु सर्व्वासु भारत ! ॥

जन्तुर्ज्येष्ठ: समभवत् जनित्र्यामेव पार्थिव ! ।

स तासामिष्ट एवासीत् न तथा ते निजा: सुता: ॥

तच्च लक्ष्मास्य तस्यासीत् सौवर्णं पार्श्व उत्तरे ।

तस्मिन् पुत्त्रशते चाग्र्य: स बभूव गुणैरपि ॥")

जन्तुकम्बु:, पुं, ( जन्तुचेतनाविशिष्ट: कम्बुरिव । ) शम्बूक: । इति राजनिर्घण्ट: ॥

जन्तुका, स्त्री, ( जन्तुभि: कायति प्रकाश्यते इति । कै+क: । अजादित्वात् टाप् । ) नाडीहिङ्गु । लाक्षा । इति राजनिर्घण्ट: ॥ ( यथा,—

"जन्तुका कलकञ्जा च तथा प्रावरकन्दकाम् ।"

इत्युत्तरस्थानेऽष्टाविंशेऽध्याये वाभटेनोक्तम् ॥)

जन्तुघ्नं, क्ली, ( जन्तून् कृमीन् हन्तीति । हन+"अमनुष्यकर्त्तृके च ।" ३ । २ । ५३ । इति टक् । ) विडङ्गम् । इति शब्दरत्नावली ॥ ( यथा, भावप्रकाशस्य चतुर्थभागे योनिकन्दचिकित्सायाम् ।

"गैरिकाम्राक्षि जन्तुघ्नं रजन्यञ्जनकट्फला: ॥")

हिङ्गु । इति रत्नमाला ॥

जन्तुघ्न:, पुं, ( जन्तून् कृमीन् हन्तीति । हन+टक् । ) बीजपूर: । इति राजनिर्घण्ट: ॥

तप, ड न दाहे । इति कविकल्पद्रुमः ॥ ( भ्वां-आत्मं-सकर्म-सकं-सेट् । ) ड, तपते । न, तपति तपते । आत्मनःआत्मनेपदीत्यके । इति दुर्गादासः ॥

तप, औ } एवैश्वर्ये । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-अकंच-अनिट् । दिवादिपक्षे आत्मं । ) एव उपतापः । "तपति तनुगात्रि ! मदनस्त्वाम् ।" औ, अताप्सीत् । य ङ, तप्यति यमी ईश्वरः खादिरार्थे । औ, अतप्त । दिवादिपक्षे ऐश्वर्य एव इत्यन्ये । इति दुर्गादासः ॥

तपः, [स्] क्ली, (तपति तापयति वा । तप उपतापे + "सर्व्वधातुभ्योऽसुन् ।" उणां । ४।१८८ । इति असुन् ।) वेदविहितशरीरक्लेशजनकं कर्म्म । यथा,—
"इमे तितिक्षया तुष्टि ! न चर्म्म तावकं वपुः ।
सोढुं ब्रह्मभावस्य तपसः सौख्यदर्शने ॥"
इति तिथ्यादितत्त्वे मत्स्यपुराणवचनम् ॥ * ॥
तत्फलं यथा,—
"तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यतः ।
दुर्भगत्वं वृथा लोको वहते सति साधने ॥"
इति च तत्रैव तद्वचनम् ॥ * ॥
अपि च । मरीचिवचनम् ।
"ब्राह्मणस्य तपोऽज्ञानं यज्ञः स्वाध्याय एव च ।
तस्मादपि ! यज्ञं ब्रूहि तपसोऽध्ययनस्य च ॥
वह्निवचनम् ।
स्वाध्यायतपसोर्वैश्य तस्मिन् निगदितं प्रभुः ।
तपसो हि परं नास्ति तपसा विन्दते महत् ।
तपसा क्षीयते पापं मोदते सह दैवतैः ।
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ॥
तपसा सर्व्वमाप्नोति तपसा विन्दते परम् ।
ज्ञानविज्ञानसम्पन्नः सौभाग्यं रूपमेव च ॥
तपसा लभते सर्व्वं तपेत्ताध्ययनेन च ।
तस्मात् सर्व्वैश्वर्ययुक्तो नित्यं विद्याति पण्डितः ॥
धर्म्मात् सुखमवाप्नोति इह लोके परत्र च ॥"
इत्याह्निके वह्निपुराणे नित्याह्निककालविधिनामाध्यायः ॥ तपस्या । तत्त्रिविधम् । शारीरं वाचिकं मानसञ्च । यथा,—
"देवद्विजगुरुप्राज्ञपूजनं शौचमार्ज्जवम् ।
ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते ॥१॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् ।
स्वाध्यायाभ्यसनञ्चैव वाङ्मयं तप उच्यते ॥२॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥"३॥
तदपि त्रिविधम् । सात्त्विकं राजसं तामसञ्च यथा,—
"श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥२॥
मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥"३॥
इति श्रीभगवद्गीतासु । १७ । १४—१९ ॥ * ॥
जनलोकादूर्द्ध्वलोकः । यथा,—
"जनलोकोपरि तपोलोकस्तिष्ठति सत्तम उदाहृतः ।
वैराजा यत्र ते देवा वसन्ति सुपूजिताः ॥
वासुदेवे मनो येषां वासुदेवेऽर्पितक्रियाः ।
तपसा तोष्य गोविन्दमभिकामविवर्ज्जिताः ॥
तं तपोलोकमासाद्य वसन्ति विजितेन्द्रियाः ।
शिलोञ्छवृत्तयो ये वै दन्तोलूखलिकाश्च ये ॥
येऽश्मकुट्टाश्च मुनयः शीर्णपर्णाशिनश्च ये ।
शीते पञ्चाग्नितपसो वर्षासु स्थण्डिलेशयाः ॥
हेमन्ते शिशिरे वा ये निमज्जन्ति जलेषु च ये ।
कृच्छ्रचान्द्रायणैरन्यैर्ये च क्षपिता यततोऽपि च ॥
वाताम्बुपाशिनो नित्यं क्षुधिताः पादाङ्गुष्ठाग्रभूमिगाः ।
ऊर्द्ध्वबाहवो रविदृष्ट्येकपादस्थानमिच्छया ॥
ये वै दिवानिशं चक्रं मासोपवासाश्च ये परे ।
मासोपवासं कुर्व्वन्ति चातुर्म्मास्यव्रताश्च ये ॥
जलान्ते तोयपाना ये ये वह्न्याद्युपवासकाः ।
ये च वर्षासु निर्मेघा वै वर्षधारासु तर्पकाः ॥
स्वाध्यायसाध्योपसंप्राप्ता ज्ञानकर्म्मक्तिसौख्यदाः ।
जटाटवीकोटरान्तः शतनीडाकुलाश्च ये ॥
प्ररूढवल्मीककाङ्गाश्च आयुगलाश्रिताश्चयाः ।
लताप्रतानैः परितो वेष्टितावयवाश्च ये ॥
गुल्मानि च प्ररूढानि यदङ्गेषु महीपते ! ।
इत्येतैर्नियमैर्ये तु क्लिष्टात्मानस्तपोधनाः ॥
अवाप्नुवन्ति तपोलोके ते वसन्त्यकुतोभयाः ॥"
इति पद्मपुराणम् ॥ * ॥
चान्द्रायणादिव्रतम् । धर्म्मः । इति मेदिनी ।सै,२४॥

तपः, पुं, ( तपति तापयति वा । तप सन्तापे + पचाद्यच् । ) शीशः । इत्यमरः । १ । ४ । १९ ॥ ( यथा, माघे । १ । ६६ ।
"तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनकॢप्तिं दधतः सदर्त्तवः पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥" )

तपःकरः, पुं, ( तपः करोतीति । कृ + टः । ) तपस्वी मनुष्यः । इति शब्दरत्नावली ॥ तपस्याकारके, त्रि ॥

तपःक्लेशसहः, त्रि, ( तपसः क्लेशं सहते इति । सह + अच् ।) दान्तः । इत्यमरः । २ । ७।४३॥

तपःस्थली, स्त्री, ( तपसः स्थली । ) काशी । इति त्रिकाण्डशेषः ॥

तपती, छाया नाम सूर्य्यपत्नी । इति त्रिकाण्डशेषः ॥ सूर्य्यकन्या । सा पूरुवंशीयसम्वरराजपुत्रकुरुभार्य्या । इति श्रीभागवतम् । ( यथा, महाभारते । १ । ९४ । ४७ ।
"ततः सम्वरणात् सौरी सुषुवे तपती कुरुम् ।"
अस्या विशेषविवरणादिकं तत्रैव १७२ अध्याये द्रष्टव्यम् ॥ )

तपनः, पुं, ( तपतीति । तप + कर्त्तरि ल्युः । ) सूर्य्यः । ( यथा, महाभारते । ३ । ३ । ६२ ।
"सहस्ररश्मिरादित्यस्तपनस्त्वं गवां पतिः ॥" )
भल्लातकवृक्षः । अग्न्यादिदाहात्मकनरकः ॥ ग्रीष्मः । इति हेमचन्द्रः ॥ तापः । इति धरणिः ॥
अर्कवृक्षः । सुमनिमन्थवृक्षः । सूर्य्यकान्तमणिः । इति राजनिर्घण्टः ॥ ( यथा, आर्य्यासप्तशत्याम् । २६ ।
"अनयनपथे प्रिये ! न यथा यथा हृदय एव दुर्घ्यापि ।
ध्यानेनैव केवलं निशि तपनशिला वासरे ज्वलति ।"
अग्निविशेषः । यथा, हरिवंशे । १७८ । ३१ ।
"ते जातवेदसः सर्व्वे कल्माषः कुसुमस्तथा ।
दहनः शोषणश्चैव तपनश्च महाबलः ॥"
स्त्रीणां नायके अलङ्कारविशेषे, क्ली । तल्लक्षणं यथा साहित्यदर्पणे । ३ । ११६ ।
"तपनं प्रियविच्छेदे स्मरावेशोत्थचेष्टितम् ॥"
उदाहरणं यथा, तत्रैव,—
"आकाशस्थपति भूतले विलुठति स्वाङ्गानमालोकते दीर्घं रोदिति विक्षिपत्यत इतः क्षामां भुजावल्लरीम् ।
किञ्च प्राणसमानकाङ्क्षितवती स्वप्नेऽपि ते सङ्गमं निद्रां वाञ्छति न प्रयच्छति पुनर्दग्धो विधिस्तामपि ॥" )

तपनच्छदः, पुं, ( तपनः आतिच्छदः छदो यस्य । ) आदित्यपत्रवृक्षः । इति राजनिर्घण्टः ॥

तपनतनया, स्त्री, ( तपनस्तापको वह्निस्तनयो यस्याः । वह्निगर्भत्वादस्यास्तथात्वम् । ) शमीवृक्षः । ( तपनस्य सूर्य्यस्य तनया । ) यमुना । इति राजनिर्घण्टः ॥

तपनमणिः, पुं, ( तपनः सूर्य्यस्तत्प्रियो मणिः । ) सूर्य्यकान्तमणिः । इति राजनिर्घण्टः ॥

तपनात्मजा, स्त्री, ( तपनस्य सूर्य्यस्य आत्मजा कन्या । ) गोदावरी नदी । इति हेमचन्द्रः ॥ यमुना च ॥

तपनी, स्त्री, (तपनः सूर्य्यो जनकतयाऽस्त्यस्या इति अच् । ततो गौरादित्वात् ङीष् । ) गोदावरी । इति हेमचन्द्रः ॥

तपनीयं, क्ली, ( तप + अनीयर् । वह्नौ शोधनीयपरीक्षणीयत्वादस्य तथात्वम् । ) स्वर्णम् । इत्यमरः । २ । ९ । ९४ ॥ (यथा, रघुः । १८।४१ ।
"तस्मादधः किञ्चिदिवावतीर्णावसंस्पृशन्तौ तपनीयपीठम् ।" )

तपनीयकं, क्ली, ( तपनीय + स्वार्थे कन् । ) सुवर्णम् । इति राजनिर्घण्टः ॥

तपनेष्टं, क्ली, ( तपनस्य सूर्य्यस्य इष्टम् । सूर्य्यप्रियत्वादस्य तथात्वम् । ) ताम्रम् । इति राजनिर्घण्टः ॥

तपसः, पुं, ( तपतीति । तप + "अत्यविचमितमीति ।" उणां । ३ । ११७ । इति असच् ।) चन्द्रः । इति त्रिकाण्डशेषः ॥ पक्षी । इति त्रिकाण्डशेषः ॥

तपस्तक्षः, पुं, (तपस्तपस्यां तक्षति तनूकरोतीति । तक्ष तनूकरणे + अण् । सर्व्वेषामादित्यप्रेरणेन तपस्विनां तपोविघ्नकरत्वादस्य तथात्वम् । ) इन्द्रः । इति हेमचन्द्रः । २ । ८७ ॥

अग्निमध्यर्चा नवेन कृत्वा चाज्याहुतीः शती ।
चक्रशङ्खगदादीनि शङ्खायग्नौ प्रतापयेत् ॥
ततस्तन्नेरर्यावाह्य तान्यभ्यर्च्य प्रणम्य च ।
गुरुं तत्याच संवन्द्य भक्त्या विज्ञापयेदिदम् ॥
उच्छिष्टभोजनादेव किङ्कराः शरणागतः ।
तप्तचक्रगदादीनि तवाङ्गानीश ! धारये ॥ इति ॥
अथ चक्रादीनामावाहनादिमन्त्रः ।
ओम् नमो भगवते सुदर्शनाय निर्वाणितसकल-
रिपुध्वजाय भगवन्नारायणकराम्भोरुहस्पर्श-
दुर्ललिताय ।
एह्येहि त्वं सहस्रार चक्रराज सुदर्शन ! ।
यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥
ओम् नमो भगवते पाञ्चजन्याय विष्णुशङ्खाय
गम्भीरघोरध्वन्याकुलीकृतकौरववाहिनीनाथाय
चिरैरादर्शितावर्णाय चिरप्रशस्ताय ।
एह्येहि पाञ्चजन्य ! त्वं नारायणकरस्थित ! ।
यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥
ओम् रं खं मं नं पाञ्चजन्याय नमः ॥ ओम्
भगवते खड्गाय नन्दकाय त्रैलोक्यपावित्राय
जयिने सकलसुरासुरसुन्दरीनेत्रोत्पलार्चिताय ॥
एह्येहि खड्गरत्न ! त्वं नन्दकाख्य सुरार्चित ! ।
यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥
ओम् खड्गाय नमः ॥ ओम् नमो भगवत्यै
कौमोदक्यै गदायै दानवेन्द्रनिसूदनायै भगवद्-
भट्टारकवासुदेवलालितायै ।
एह्येहि त्वं गदे ! देवि कौमोदक्यायुधेश्वरि ! ।
यज्ञभागं प्रगृह्णस्व पूजाञ्चैव नमो नमः ॥
ओम् रं खं चं कं सं गदायै नमः ॥ एवं पद्माय
नमः । शार्ङ्गाय शार्ङ्गाय नमः । इति ॥ * ॥
अथ धारणमन्त्रः ।
सुदर्शन ! महाज्वाल सूर्य्यकोटिसमप्रभ ! ।
अज्ञानान्धस्य मे नित्यं विष्णोर्म्मार्गं प्रदर्शय ॥
तथा ।
पाञ्चजन्य ! निजध्वानध्वस्तपातकसञ्चय ।
पाहि मां पापिनं घोरसंसारार्णवपातिनमिति ॥
इत्युच्चारयन् मन्त्रं दक्षिणादिक्रमेण तु ।
भुजयोश्चक्रपूर्व्वाणि शस्त्रास्त्राणि धारयेत् ॥
कलशादिपरीवारान् निजान् सर्व्वांश्च वैष्णवः ।
भगवत्यर्पयन् तप्तमुद्राभिस्ताभिरङ्कयेत् ॥
तथा च । वाराहे ।
अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः ।
कलशाद्यन्यथोत्थेषु पद्मादिषु च सम्यदे ॥
किञ्च ।
आयसं विधिवत् कृत्वा पञ्चायुधविधानतः ।
तत्तन्मन्त्रेण मन्त्रज्ञः प्रतिष्ठाप्य पृथक् पृथक् ॥
ललाटे च गदा धार्य्या मूर्द्ध्नि चापं शरस्तथा ।
नन्दकञ्चैव हृन्मध्ये शङ्खचक्रे भुजद्वये ॥
किञ्च ।
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये च शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥
अथ चक्रादिप्रतिकृतिग्रहणम् । नवमप्रपञ्च-
रात्रे ।
सौवर्णं राजतं ताम्रं कांस्यमायसमेव वा ।
चक्रं कृत्वा तु मेधावी धारयेत विचक्षण इति ॥
एवमेव प्रबोधिन्यां द्वादश्यां भगवत्परैः ।
तप्तमुद्रा ध्रुवं धार्य्या द्वारकायां विशेषतः ॥

इति श्रीहरिभक्तिविलासे १५ विलासः ॥

तप्तरूपकं, क्ली, (तप्तं वह्निशोधितं रूपकं रूप्यम् ।) शुद्धरौप्यम् । इति राजनिर्घण्टः ॥
तप्तभूमिकुण्डं, क्ली, ( तप्ता अग्निमयी भूर्म्मिः लौहप्रतिमूर्त्तिर्यत्र । तथाविधं कुण्डं यस्मिन् ।) नरकविशेषः । इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
तप्तसुराकुण्डं, क्ली, (तप्तायाः सुरायाः कुण्डमिव ।) नरकविशेषः । इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
तम, उ इ र भ य खेदे । इच्छायाम् । इति कविकल्पद्रुमः ॥ ( दिवां-परं-अकं-सेट् । ) उ, तमित्वा तान्त्वा । इर्, अतमत् अतमीत् । अज्ञात् पुष्पादित्वात् नित्यं ङ इत्यन्ये । भ य, ताम्यति लोकः उत्तप्तः खादित्यर्थः । इति दुर्गादासः ॥
तमं, क्ली, ( ताम्यत्यस्मादनेन वा । तम+अपादाने करणे वा संज्ञायां घः ।) अन्धकारः । इति शब्दरत्नावली ॥ पादाग्रम् । इति शब्दचन्द्रिका ॥
तमः, पुं, ( ताम्यत्यनेनेति । तम+संज्ञायां घः ।) तमोगुणः । इत्यमरटीकायां रायमुकुटः ॥ तमालवृक्षः । इति शब्दचन्द्रिका ॥ ( राहुः । इत्यमरः ।१।३।२६। यथा, ज्योतिषे होरायाम् । "भृगुतमबुधर्णैर्वैरिति । कितवत्समर्क्षेति वराहः ॥" इति उणादिवृत्तिटीकायां उज्ज्वलदत्तः । ४ । १८८ ॥ )
तमः, [ स् ] क्ली, ( ताम्यत्यनेनेति । तम+"सर्व्वधातुभ्योऽसुन् ।" उणां । ४ । १८८ । इति असुन् । ) प्रकृतेर्गुणविशेषः । यथा,—
"सत्त्वं रजस्तम इति इयन्ते पुरुषे गुणाः ।
कालसञ्चोदितास्तेऽपि परिवर्त्तन्त आत्मनि ॥
प्रभूतञ्च यदा सत्त्वं मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रतिः ॥
यदा कर्म्मसु काम्येषु भक्तिर्यशसि देहिनाम् ।
तदा त्रेता रजोवृत्तिरिति जानीहि शौनक ! ॥
यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः ।
कर्म्मणाञ्चापि काम्यानां द्वापरन्तद्रजस्तमः ॥
यदा सदानृतं तन्द्रा निद्राहिंसादिसाधनम् ।
शोकमोहभयं दैन्यं स कलिस्तु तदा स्मृतः ॥"

इति गारुडे २२७ अध्यायः ॥ * ॥

अपि च ।
"तमस्त्वज्ञानजं विद्धि मोहनं सर्व्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ! ॥
सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत ! ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ! ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥"
"अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ! ॥
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥
रजसि प्रलयं गत्वा कर्म्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥
कर्म्मणः सुकृतस्याहुः सात्त्विकं निर्म्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥
सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥
ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥"

इति श्रीभगवद्गीतायाम् । १४ । ८-१८ ॥

तत्तु आवरकं मोहहेतुः । इत्यमरभरतौ ॥ अस्य कार्य्यं संहारः । इति श्रीधरस्वामी ॥ तस्य धर्म्मो यथा । प्रमादः १ मोहः २ भयम् ३ क्लान्तिः ४ विषादः ५ शोकः ६ अरतिः ७ अनार्य्यता ८ । इति मोक्षधर्म्मः ॥ भ्रमः ९ तन्द्रा १० । इत्याश्वमेधिकपर्व्व ॥ अन्धकारः । ( यथा, महाभारते । १ । १०५ । १० । "तमसा लोकमावृत्य नौगतामेव भारत ! ॥" ) तत्पर्य्यायः । तमसम् २ तिमिरम् ३ ध्वान्तम् ... रजोबलम् ५ दिवान्धकः ६ विषमूर्त्तिः ७ रात्रिकूट ८ वृत्तः ९ । इति त्रिकाण्डशेषः ॥ रजोरसम् १० दिवान्तरम् ११ अन्धकम् १२ । इति शब्दरत्नावली ॥ अमरोक्तपर्य्यायोऽन्धकारशब्दे द्रष्टव्यः ॥ शोकः । इति मेदिनी । से, २४ ॥ पापम् । इति हेमचन्द्रः ॥ (राहुः । इति मेदिनी । से, २४ ॥ यथा, रघुः । ८ । ३७ ।
"निमिमील नरोत्तमप्रिया
हृतचन्द्रा तमसेव कौमुदी ॥" )
तमङ्गकः, पुं, इन्द्रकोषः । मञ्चकः । इति हेमचन्द्रत्रिकाण्डशेषश्च ॥
तमतः, त्रि, ( तम+"भृमृदृशियजिपर्व्विपच्यमितमीति ।" उणां । ३ । ११० । इति अतच् । ) तृषितः । वाञ्छितः । इत्युणादिकोषः ॥
तमप्रभः, पुं, ( तम इव प्रभाऽस्य अस्मिन् वा । ) नरकभेदः । इति हेमचन्द्रः ॥
तमरं, क्ली, ( तमं रातीति । रा+कः । ) वङ्गम् । इति हेमचन्द्रः ॥
तमराजः, पुं, ( तम इव राजते । राज+अच् । ) शर्करविशेषः । नवात इति ख्यात इति केचित् । तत्पर्य्यायः । शालकः २ । तस्य गुणाः । तृष्णाज्वरदाहरक्तपित्तनाशित्वम् । इति राजवल्लभः ॥
तमसं, क्ली, ( तम+"अत्यविचमितमीति ।" उणां । ३ । ११७ । इति असच् ।) अन्धकारः । इति त्रिकाण्डशेषः ॥ नगरम् । इति संक्षिप्तसारे उणादिवृत्तिः ॥
तमसः, पुं, ( तम+असच् । ) कूपः । अन्धकारः । इति संक्षिप्तसारे उणादिवृत्तिः ॥
तमसा, स्त्री, ( तमइव जलमस्त्यस्याः । अच् टाप् च । ) नदीविशेषः । इति संक्षिप्तसारे उणादिवृत्तिः ॥ (यथा, महाभारते । ३ । २२१ । २४ । "तमसा नर्म्मदा चैव नदी गोदावरी तथा ॥")

तमस्तति, स्त्री, ( तमसस्ततिः सन्ततः । ) अन्धकारसमूहः । इति तमिस्राशब्दार्थे मेदिनी ॥

तमस्विनी, स्त्री, ( तमो विद्यतेऽस्यामिति विनिः ङीप् च । ) रात्रिः । ( यथा, महाभारते । ४ । २१ । १८ ।
"अद्यास्यामागतायां तमस्विन्यामनिन्दिते ! ।
नागोविलमिवाक्रम्य पोथयिष्याम्यहं शिरः ॥")
हरिद्रा । इत्यमरः । २ । ९ । ४१ ॥

तमा, स्त्री, ( तमोऽस्त्यस्यामिति । तम + अच् टाप् च । ) रात्रिः । इति हेमचन्द्रः ॥ तमालवृक्षः । इति शब्दचन्द्रिका ॥

तमाः, [ स् ] पुं, राहुः । इति मेदिनी । से, २४ ॥

तमालं, क्ली, (ताम्यति काङ्क्षति इति । तमु काङ्क्षायाम् + "तमिविशिबिडीति ।" उणां ।१।११७। इति कालन् । ) पत्रकम् । इति राजनिर्घण्टः ॥

तमालः, पुं, ( तमु काङ्क्षायाम् + कालन् । ) वृक्षविशेषः । तत्पर्य्यायः । कालस्कन्धः २ तापिच्छः ३ । इत्यमरः । २ । ४ । ६८ ॥ तापिञ्जः ४ । इति भरतः ॥ नीलतालः ५ तमालकः ६ नीलध्वजः ७ कालतालः ८ महाबलः ९ । ( यथा, भागवते । ३ । १३ । ३३ ।
"तमालनीलं सितदन्तकोट्या
क्ष्मामुत्क्षिपन्तं गजलीलयाङ्ग ॥")
अस्य गुणाः । मधुरत्वम् । बल्यत्वम् । हृद्यत्वम् । शिशिरत्वम् । गुरुत्वम् । कफपित्ततृषादाहश्रमभ्रान्तिकरत्वञ्च । इति राजनिर्घण्टः ॥ तिलकम् । ( यथा, कुट्टनीमते । १६ ।
"यस्यामुपवनवीथ्यां तमालपत्राणि युवतिवदने च ।
नखरप्रहाररचितं तन्वीवाक्येषु सुरतकलहेषु ॥"
तमालस्तापिच्छवृक्षः युवतिवदनपक्षे तिलकमिति ॥ ) खड्गः । वरुणवृक्षः । इति मेदिनी । ले, ९७ ॥ श्वेतखदिरः । इति शब्दचन्द्रिका ॥ वृक्षभेदे वंशत्वचि च पुं क्ली । इति लिङ्गादिसंग्रहे अमरभरतौ ॥

तमालकं, क्ली, ( तमालपत्रवत् वर्णेन कायतीति । कै + कः । ) सुनिषण्णशाकम् । इति त्रिकाण्डशेषः ॥ ( तमालमेव । स्वार्थे कन् । ) पत्रकम् । इति राजनिर्घण्टः ॥ तेजपात इति भाषा ॥

तमालकः, पुं, क्ली, ( तमाल एव । स्वार्थे कन् । ) तमालवृक्षः । ( यथा, रामायणे । २ । ९१ । ५० ।
"ततः सरलतालाश्च तिलकाः सतमालकाः ।
प्रहृष्टास्तत्र सम्पेतुः कुब्जा भूत्वाथ वामनाः ॥")
वंशत्वक् । इति शब्दरत्नावली ॥

तमालपत्रं, क्ली, ( तमालस्य पत्रमिव वर्णोऽस्यास्तीति । अर्श आदित्वात् अच् । ) तिलकम् । पत्रकम् । ( यथास्य पर्य्यायाः ।
"पत्रन्तमालपत्रञ्च तथा स्यात् पत्रनामकम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
तमालवृक्षः । इति मेदिनी । रे, ३०२ ॥ (तमालस्य पत्रम् । यथा, रघुः । ६ । ६४ ।
"तमालपत्रास्तरणासु रन्तुं
प्रसीद शश्वन्मलयस्थलीषु ॥" )

तमालिका, स्त्री, ( तमालाः सन्त्यत्र । तमाल + ठन् । ) ताम्रलिप्तदेशः । इति त्रिकाण्डशेषः ॥ ताम्रवल्ली । भूम्यामलकी । इति राजनिर्घण्टः ॥

तमालिनी, स्त्री, ( तमालो तमालवर्णोऽस्त्यस्या इति । इनिः ततो ङीप् ।) भूम्यामलकी । इति राजनिर्घण्टः ॥ ताम्रलिप्तदेशः । इति हेमचन्द्रः ॥

तमाली, स्त्री, ( तम + कालन् । गौरादित्वात् ङीष् । ) ताम्रवल्ली । वरुणवृक्षः । इति राजनिर्घण्टः ॥

तमिः, स्त्री, ( ताम्यति ग्लायतेऽत्र । तम + "सर्व्वधातुभ्य इन् ।" उणां । ४ । ११७ । इतीन् । ) रात्रिः । इत्यमरटीकायां भरतः ॥

तमिस्रं, क्ली, (तमोऽस्त्यत्र । "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४। इति निपातनात् साधुः । यद्वा, तमिस्रा अस्त्याश्रयत्वेनास्य अच् ।) अन्धकारम् । इत्यमरः ॥ (यथा, महाभारते । ४ । २१ । १७।
"यदेतन्नर्त्तनागारं मत्स्यराजेन कारितम् ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम्॥
तमिस्रे तत्र गच्छेथा गन्धर्व्वास्तत्र जानते ॥" )
क्रोधः । इति मेदिनी ।रे, ६१ ॥ (नरकविशेषः । यथा, भागवते । ४ । ७ । ४४ ।
"अमङ्गलानाञ्च तमिस्रमुल्बणं
विपर्य्ययः केन तदेव कस्यचित् ॥" )

तमिस्रपक्षः, पुं, ( तमिस्रमन्धकारं तत्प्रधानः पक्षः । ) कृष्णपक्षः । यथा, तमिस्रपक्षत्रुटिकूटभक्षितमिति श्रीहर्षः ॥

तमिस्रा, स्त्री, ( तमोबहुत्वमस्ति अस्याम् । "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ । इति निपातनात् साधुः । ) अन्धकाररात्रिः । कृष्णपक्षनिशा । इत्यमरः ॥ तमोयुक्तरात्रिमात्रम् । इति रायमुकुटः ॥ दर्शरात्रिः । इति वाचस्पतिः ॥ तमस्ततिः । इति मेदिनी । रे, १६१ ॥ ( यथा, रघुः । ५ । १३ ।
"सूर्य्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ॥")

तमी, स्त्री, ( तमिः कृदिकारादिति वा ङीष् । ) रात्रिः । ( यथा, माघे । ९ । २३ ।
"दहशेऽपि भास्करकराह्नि न यः
स तमीं तमोभिरभिगम्य तताम् ॥")
हरिद्रा । इत्यमरः । २ । ९ । ४१ ॥

तमोघ्नः, पुं, ( तमोऽन्धकारं मोहमज्ञानं वा हन्तीति । हन + टक् ।) वह्निः । सूर्य्यः । (यथा, महाभारते । ७ । १४४ । १३६ ।
"स देवशत्रूनिव देवराजः
किरीटमाली व्यधमत् समन्तात् ।
यथा तमांस्यभ्युदितस्तमोघ्नः
पूर्व्वप्रतिज्ञां समवाप्य वीरः ॥" )
चन्द्रः । बुद्धः । केशवः । शम्भुः । इति मेदिनी । ने, ७१ ॥

तमोज्योतिः, [ स् ] पुं, ( तमसि ज्योतिर्यस्य ।) ज्योतिरिङ्गणः । इति शब्दरत्नावली ॥

तमोनुत्, [ द् ] पुं, ( तमोऽन्धकारं नुदतीति ॥ नुद् + क्विप् ।) अग्निः । सूर्य्यः । चन्द्रः । दीपः इति शब्दरत्नावली ॥ (तमोनाशके, त्रि । यथा महाभारते । १३ । १६६ । ८ ।
"एवमुक्तस्तदात्रिर्वै तमोनुदभवच्छशी ।
अभवत् सौम्यभावाच्च सोमवत् प्रियदर्शनः ॥")

तमोनुदः, पुं, ( तमोऽन्धकारं नुदतीति । नुद् + "इगुपधज्ञेति ।" ३ । १ । १३५ । इति कः । ) सूर्य्यः । इति शब्दरत्नावली ॥ (अग्निः । चन्द्रः । इति विश्वः ॥ यथा, रघुः । ३ । ३३ ।
"नरेन्द्रकन्यास्तमवाप्य सत्पतिं
तमोनुदं दक्षसुता इवाबभुः ॥"
प्रकृतिप्रेरकः । यथा, मनुः । १ । ६ ।
"ततः स्वयम्भुर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥")

तमोपहः, पुं, (तमोऽन्धकारं अपहन्तीति । अप + हन् + "अपे क्लेशतमसोः ।" ३ । २ । ५० । इति डः । ) सूर्य्यः । चन्द्रः । बुद्धः । अग्निः । इति मेदिनी । हे, ३० ॥ ( अज्ञाननाशके, त्रि । यथा, किरातार्ज्जुनीये । ५ । २२ ।
"आगमादिव तमोपहादितः
सम्भवन्ति मतयो भवच्छिदः ॥" )

तमोभित्, [ द् ] पुं, ( तमस्तिमिरं भिनत्ति स्वज्योतिःप्रकाशनेन नाशयतीति । भिद् + क्विप् । ) खद्योतः । इति शब्दमाला ॥

तमोमणिः, पुं, ( तमसि अन्धकारे मणिरिव । ) खद्योतः । इति त्रिकाण्डशेषः ॥ गोमेदकमणिः । इति राजनिर्घण्टः ॥

तमोलिप्ती, स्त्री, ( तमसा लिप्यते इति । लिप + क्तः निपातनात् ङीप् । ) देशविशेषः । तमोलुक इति भाषा ॥ तत्पर्य्यायः । ताम्रलिप्तः २ वेलाकूलम् ३ तमालिका ४ । इति शब्दरत्नावली ॥ ताम्रलिप्तम् ५ ताम्रलिप्ती ६ । इति त्रिकाण्डशेषः ॥ दामलिप्तम् ७ तमालिनी ८ स्तम्बपूः ९ विष्णुगृहम् १० । इति हेमचन्द्रः ॥

तमोविकारः, पुं, (तमस एव विकारो यत्र ।) रोगः । इति राजनिर्घण्टः ॥

तमोहरः, पुं, ( तमो हरतीति । हृ + अच् । तमस्य हर इति वा ।) चन्द्रः । इति शब्दरत्नावली ॥ ( अग्निः । सूर्य्यः । इति व्युत्पत्तिलब्धोऽर्थः ॥ )

तम्या, स्त्री, ( तम्यति गच्छतीति । तम्ब + अच् । पृषोदरादित्वात् साधुः । ) गौः । इति हेमचन्द्रः । ४ । ३३ ॥

तम्ब, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् । ) ओष्ठ्यवर्गशेषोपधः । तम्बति । इति दुर्गादासः ॥

तम्बा, स्त्री, ( तम्बति गच्छतीति । तम्ब + अच् ।) गौः । इति हेमचन्द्रः । ४ । ३३२ ॥

तय, ङ गतौ । रक्षे । इति कविकल्पद्रुमः ॥ ( भ्वां-आत्मं-सकं-सेट् । ) ङ, तयते । इति दुर्गादासः ॥

तरः, पुं, ( तॄ तरणे + “ऋदोरप् ।” ३।३।५७। इति अप् । ) तरणम् । ( यथा, मनुः । ८ । ४०४ ।
“पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे ॥”)
तप्याशुः । इति मेदिनी । रे, ४० ॥ इच्चः । इति भूरिप्रयोगः ॥ (“तरतमौ द्विबहूनामेकोत्कर्षे ।” इति मुग्धबोधसूत्रात् प्रत्ययविशेषश्च ॥)

तरः, [ स् ] क्ली, ( तॄ प्लवनतरणयोः + करणादौ यथायथं असुन् । ) बलम् । ( यथा, रघुः । ११ । ७७ ।
“तिष्ठतु प्रधनमेवमप्यहं
तुल्यबाहुतरसा जितस्त्वया ॥” )
वेगः । तीरम् । प्लवगः । इति शब्दरत्नावली ॥

तरक्षः, पुं, (तरक्षु + पृषोदरात् उलोपः ।) तरक्षुः । इत्यमरटीकायां भरतः ॥ ( यथा, बृहत्संहितायाम् । १२ । ६ ।
“शैलकूटेस्तरक्षर्क्षग्राहसंघातसङ्गाधाविते: ॥)

तरक्षुः, पुं, ( तरं बलं मार्गं वा क्षिणोति । क्षिण हिंसायाम् + मितद्र्वादित्वात् डुः । ) व्याघ्रविशेषः । नेकड़े बाघ इति भाषा ॥ तत्पर्य्यायः । तक्षुः २ मृगादनः ३ तरक्षुकः ४ । इति शब्दरत्नावली ॥ (यथा, हरिवंशे । १६३ । १४ ।
“ततो मायां परां चक्रे देवशत्रुः प्रतापवान् ।
सिंहान् व्याघ्रान् वराहांश्च तरक्षूनृक्षवानरान् ॥”)

तरक्षुकः, पुं, ( तरक्षु + स्वार्थे कन् । ) तरक्षुः । इति शब्दरत्नावली ॥

तरङ्गः, पुं, ( तरति प्लवते इति । तॄ + “तरत्यादिभ्यश्च ।” उणां । १ । ११६ । इति अङ्गच् । ) वायुना नद्यादिजलस्य तिर्य्यगूर्द्ध्वगमनम् । ढेउ इति भाषा ॥ तत्पर्य्यायः । भङ्गः २ ऊर्म्मिः ३ वीचिः ४ । इत्यमरः ॥ ऊर्म्मी ५ वीची ६ विचिः ७ लहरी ८ इल्ली ९ विलिः १० । इति भरतः ॥ लहरिः ११ । इति सारसुन्दरी ॥ जललता १२ भङ्गिः १३ । इति हारावली ॥ उत्कलिका १४ ऊर्म्मिका १५ । इति जटाधरः ॥ वस्त्रम् । हयादीनां समुत्फालः । इत्युणादिकोषः ॥

तरङ्गिणी, स्त्री, ( तरङ्गो वीचिरस्त्यस्या इति । तरङ्ग + “अत इनिठनौ ।” इति इनिः । ) नदी । इत्यमरः । १ । १० । ३० ॥ ( यथा, माघः ।
“तरङ्गिणी वेणिरिवायता भुवः ॥” )

तरणं, क्ली, ( तॄ + भावे ल्युट् । ) प्लवनपूर्ब्बकदेशान्तरगमनम् । इति दुर्गादासः ॥ पारगमनम् । सन्तरणम् । यथा, मोहमुद्गरे । ६ ।
“क्षणमपि सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका ॥”

तरणः, पुं, ( तीर्य्यतेऽनेनेति । तॄ + करणे ल्युट् । ) भेलकः । इति त्रिकाण्डशेषः ॥ स्वर्गः । इति शब्दचन्द्रिका ॥

तरणिः, स्त्री, ( तीर्य्यतेऽनयेति । तॄ + “अर्त्तिसृधृधम्यम्यश्यवितॄभ्योऽनिः ।” उणां । २ । १०३ । इति अनिः । ) नौका । ( यथा, आर्य्यासप्तशत्याम् । ३९० ।
“कामसुखावति तरणिस्तदपि गुणाकर्षतरलेयम् ॥”)
घृतकुमारी । इत्यमरः । ४ । २ । ७३ ॥

तरणिः, पुं, ( तरति पापमनेनेति । तॄ + अनिः । ) सूर्य्यः । ( यथा, देवीभागवते । ३ । ६ । २८ ।
“इत्युक्त्वा तरणिः कुन्तीं तामनङ्गां सुलज्जिताम् ।
भुक्त्वा जगाम देवेभ्यो वरं दत्त्वाभिवाञ्छितम् ॥”)
अर्कवृक्षः । इत्यमरः ॥ भेलकः । ( यथा, बोपदेवग्रन्थे साश्लोकः ।
“सोऽयं व्याकरणार्णवैकतरणिर्धातुर्थचिन्तामणि-
र्जीयात् कोविदगर्व्वपर्व्वतपविः श्रीवोपदेवः कविः ॥” )
किरणः । इति हेमचन्द्रः ॥

तरणिपेटकः, पुं, (तरणिः पेटक इव । ) काष्ठाम्बुवाहिनी । इति जटाधरः ॥

तरणिरत्नं, क्ली, ( तरणिः सूर्य्यस्तत्प्रियं रत्नम् । ) माणिक्यम् । इति राजनिर्घण्टः ॥

तरणी, स्त्री, (तरणिः । कृदिकारादिति वा ङीष् ।) नौका । इति शब्दरत्नावली ॥ महासहा । पत्रचारिणी । इति शब्दचन्द्रिका ॥ घृतकुमारी । इत्यमरटीकायां भरतः ॥

तरण्डः, पुं, स्त्री, (तरति प्लवत इति । तॄ प्लवनतरणयोः + बाहुलकात् अण्डन् । ) । वडिशीसूत्रबद्धकाष्ठादि । प्लवः । नौका । इति मेदिनी । डे, २९ ॥ कुम्भतुम्बीरम्भादिमयचरः । इति शब्दरत्नावली ॥

तरण्डः, पुं, देशविशेषः । इति शब्दरत्नावली ॥

तरण्डपादा, स्त्री, ( तरण्डः प्लवनशीलः पादः प्रायेण तुरीयांशो यस्याः । ) नौका । इति शब्दरत्नावली ॥

तरण्डी, स्त्री, (तरत्यनयेति । तॄ + अण्डन् । गौरादित्वात् ङीष् ।) नौका । इति शब्दरत्नावली ॥ ( तरण्डा । इति हारावलीधृतपाठः । ५५ ॥ )

तरत्, [ द् ] स्त्री, ( तरत्यनेनेति । तॄ + बाहुलकाददिः । ) प्लवः । ( तरतीति । तॄ + कर्त्तरि अदिः ।) कारण्डवपक्षी । इति मेदिनी । दे, २९ ॥

तरटी, स्त्री, कण्टकिवृक्षभेदः । तत्पर्य्यायः । तारटी २ तीव्रा ३ खर्व्वुरा ४ रक्तबीजका ५ । अस्या गुणाः । तिक्तत्वम् । मधुरत्वम् । गुरुत्वम् । वश्यत्वम् । कफवातापहत्वञ्च । इति राजनिर्घण्टः ॥

तरन्तः, पुं, ( तरतीति । तॄ + “तॄभूवहिवसीति ।” उणां । ३ । १२८ । इति झच् ।) भेकः । आसारः । ( तीर्य्यते इति । + कर्म्मणि झच् । ) समुद्रः । इत्युणादिकोषः ॥

तरन्ती, स्त्री, ( तीर्य्यतेऽनयेति । तॄ + झच् । ततो ङीष् । ) तरिः । इत्युणादिकोषः ॥

तरपण्यं, क्ली, ( तॄ + भावे अप् । तरस्तरणं तस्य पण्यम् । ) आतरः । इत्यमरः । १ । १० । ११ ॥ नौका भाड़ा इति भाषा ॥

तरलुणं, क्ली, ( तरं तरणं अनुवन् व्याप्तिश्च । अन + बहुलवचनात् णः ।) फलविशेषः । तरमूज इति ख्यातः । यथा, कलारकामाकारतन्त्रे ।
“व्योहि मांसि मरीन्द्रानि । पौर्णमाखी विशार्दने ।
क्षुधातुरा महाकाली भ्रमन्ती पिङ्गलानने ॥
तन्मात्रा मनसा तस्ये कर्णे दत्तं तरलुणम् ।
तत्फलभक्षणात्तृप्ता वरदा सा हरप्रिया ॥
यो मे दद्यात् फलं रम्यं स चिरात् सुखपुष्टिमान् ॥”

तरलः, पुं, ( तॄ + “वृषादिभ्यश्चित् ।” उणां । १ । १०८ । इति कलप्रत्ययश्चित्त्व ।) हारः । हारमध्यमणिः । ( यथा, महाभारते । ८ । ६९ । १९ ।
“प्रकीर्णका विप्रकीर्णाश्च राजन् !
प्रवालमुक्तातरलाश्च हाराः ॥”)
तलम् । इति जयमालः ॥ ( जनपदविशेषः । तद्देशवासिनि बहुवचनान्तः । यथा, महाभारते । ८ । ८ । २० ।
“वतुषाम् कलिङ्गान् तरलानश्मकानृषिका- [नपि ॥”)

तरलः, त्रि, ( तॄ + कलच् । ) चलः । ( यथा नैषधे । ५ । २४ ।
“अः स्वभावमधुरैरनुभावैस्तावकैरतितरां तरलाः स्मः ॥”)
विड़्गः । भास्वरः । इति मेदिनी । ले, ९५ ॥ मध्यशून्यद्रव्यम् । इति धरणिः । द्रवीभूतश्च ॥

तरलनयना, स्त्री, (तरले चञ्चले लोचने यस्याः ।) चञ्चलनयना नारी । इति हेमचन्द्रः ॥

तरला, स्त्री, ( तॄ + कलच् टाप् च । ) यवागूः । सुरा । इति मेदिनी । ले, ९६ ॥ मधुमक्षिका । इति हेमचन्द्रः ॥

तरलितं, त्रि, (तरलं तारल्यमस्य जातम् । तरल + इतच् । तरल इवाचरति तारलं करोतीति तरल + क्विप् + णिच् + क्त इति केचित् । ) जाततारल्यम् । तत्पर्य्यायः । प्रेङ्खोलितम् २ लुलितम् ३ प्रेङ्खितम् ४ धुतम् ५ चलितम् ६ कम्पितम् ७ धूतम् ८ वेल्लितम् ९ आन्दोलितम् १० । इति हेमचन्द्रः ॥ (यथा, गीतगोविन्दे । १२ । १५ ।
“व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौ कपोलौ ॥”)

तरवारिः, पुं, ( तरं वमावतविपक्षबलं वारयतीति । तृ + णिच् + इन् । ) खड्गः । तरवार इति भाषा । इति हेमचन्द्रः । ३ । ४४५ ॥

अथ खड्गपरीक्षा ।
“अङ्गं रूपं तथा जातिर्नेत्रारिष्टे च भूमिका ।
ध्वनिर्म्मानमिति प्रोक्तं खड्गज्ञानाष्टकं शुभम् ॥
अभिन्ने दृश्यते याहक् भिन्नेऽपि चाङ्कितं तथा ।
यदेव दृश्यते चिह्नं तदङ्गं संप्रचक्षते ॥
नीलत्वादिकं खड्गे रूपमित्यभिधीयते ।
तेनैव यत् प्रतीतं स्यात् तज्जातिरिति गद्यते ॥
अङ्गातिरिक्तं यज्जातिकाकपादादिलक्षणम् ।
तन्नेत्रमिति नामेयात् खड्गे खड्गविशारदाः ॥
अङ्गातिरिक्तं खड्गादिसुकाकमकणकम् ।
तदरिष्टमिति प्राहुर्मुनिरङ्गादिवादकम् ॥

भूमिरञ्जनसङ्काशा धारा चास्य सिता भवेत् ।
अञ्जनाख्यमिदं प्रायः सर्व्वदैवोपलभ्यते ॥”
लौहप्रदीपेऽपि ।
“धारा शुभ्रा भवेद्यस्य भूमिः कज्जलसन्निभा ।
कृष्णरक्तैर्युतं वापि विद्यात् कज्जलवत्कम् ॥२७॥
मधुवर्णसमा भूमिरङ्गं वा मधुबिन्दुवत् ।
क्षौद्राख्यमिति जानीयात् जयलक्ष्मीयशःप्रदम् ॥”
शार्ङ्गधरेऽपि ।
“निम्बकल्को भवेद्यत्र रात्रिश्चिह्नविलेपितः ।
मधुरो मधुवर्णाभः स खड्गो देववल्लभः ॥
विशेषाच्चात्र रज्यन्ति सततं मक्षिकादयः ॥२८॥
आत्मीमकोषिका यस्य स्फुटाङ्गं कुक्कुलीकृतम् ॥
कुक्कुवत्कनामानं प्राह नागार्ज्जुनो मुनिः ।
इदं कुक्कुवत्कञ्च प्राह लौहार्णवे मुनिः ॥
अस्य घातेषु बलवान् दाहः समवलोकितः ॥२९॥
यदङ्गं मक्षिकाकारं भूमिश्चैव सितासिता ॥
क्लेदः शुष्यति चैवास्य मक्षिकाङ्गं तमादिशेत् ॥३०॥
अङ्गं यदा तुषाकारं या च भूमिः सितासिता ॥
तुषवत्कमिदं ख्यातं प्राह नागार्ज्जुनो मुनिः ॥३१॥
अङ्गं यवफलाकारं भूमिः कृष्णा सिता तथा ॥
यवाङ्गमिति तं विद्यात्तत्त्वज्ञो कञ्जसम्भवः ।
एष खड्गाधमश्चाप्यो यदीच्छेद्भूतिमात्मनः ॥३२
अङ्गं व्रीहिप्रसूनाभं भूमिर्धूम्रा घतेऽतिरुक् ।
तद्व्रीहिवत्कं जानीयाच्छत्रूणां भयवर्द्धनम् ३३ ॥
अतसीफलसङ्काशमङ्गं भूमिः सितासिता ।
अतसीवत्कमाख्यातं तत्क्षते शिरसो रुजा ३४ ॥
यदा सर्षपबीजाभमङ्गं भूमिः सितासिता ।
खरधारः खरस्पर्शः सर्पाङ्गः स दुर्लभः ॥३५॥
सिंह्याकारं भवेद्यस्य अङ्गं भूमिः सितासिता ।
सिंहीवत्कन्तु तद्विद्यात्तत्क्षते प्रलपेन्नरः ॥
एतद्धावनतोयेन कासरोगोपनाशनम् ॥३६॥
अङ्गं तण्डुलसङ्काशं भूमिर्धूम्रा सितासिता ।
तण्डुलाङ्गमिमं विद्याद्यशःश्रीबलवर्द्धनम् ।
एतत्पर्य्युषितं तोयं तण्डुलोदकसन्निभम् ॥
अस्य प्रभावाच्छत्रुणो भर्त्ता हि लभते श्रियम् ॥३७
अङ्गचञ्चुक्षुराकारं भूमिराघातनिःसृता ॥
खड्गाधममिदं विद्याल्लोवत्कं नाम नामतः ॥३८॥
स्थूला दीर्घाः शिराः कृष्णा भूमिश्चैव सिता-
सिता ॥
शिराङ्गमिति तं ब्रूयादेनं खड्गाधमं बुधाः ॥३९।
शिवलिङ्गाकृतिश्चाङ्गे धारा चैव सितायवा ॥
शिवाङ्गमिति तं ब्रूयाच्छत्रुपक्षनिसूदनम् ॥४०॥
यदा व्याघ्रनखाकारमङ्गं भूमिस्तु पिङ्गला ॥
नखवत्कमिदं ब्रूयात्तत्क्षते श्वयथुर्भवेत् ।
एतद्रामिषसंस्पर्शात् प्रविशेत् स्वयमेव हि ॥४१॥
व्याघ्रपुच्छोपमञ्चाङ्गं भूमिर्धूम्रा खराकृतिः ।
व्याघ्राङ्गमिति जानीयाच्छत्रुवंशोपनाशनम् ॥
अस्य स्पर्शनमात्रेण जीवन्नत्स्या जहत्यसून् ॥४२॥
यदा मनुजनेत्राभमङ्गं भूमिः सितासिता ॥
नेत्राङ्गमिति जानीयात् संग्रामे विजयप्रदम् ।
एतद्धावनतोयेन नूनमन्धोऽपि पश्यति ॥४३॥
अङ्गं केशसमं यस्य भूमिर्धूम्रा सितासिता ।
केशाङ्गमिति जानीयात् क्लेशदुःखभयापहम् ॥४४॥
निरङ्गं स्थूलप्रकृतिस्तुफलाङ्गं विदुर्बुधाः ।
एतद्धि प्रायशो लोके दृश्यते द्विजसत्तम ! ॥”४५
पद्मपुराणस्य ।
“निरङ्गा निशिता धारा घाती वह्निं वमत्यपि ।
क्रोणीवत्कमिदं ज्ञेयं पृथिव्यां नातिदुर्लभम् ॥४६॥
अङ्गं काकपदाकारं भूमिराघातनिःसृता ।
एष खड्गाधमश्चाप्यो काकाङ्गो भूति-
मिच्छता ॥४७॥
यदा कपालमङ्गेषु दृश्यते स्पर्शतः खरम् ।
एतद्धि दुःखजनकं कपालाङ्गं बुधस्त्यजेत् ॥४८॥
तन्वीपत्रा बलाङ्गा या सुवर्णाङ्गासिपुत्रिका ।
पत्रवत्कमाख्यातं आयुर्व्वेदविदो जनाः ॥”
लौहार्णवेऽपि ।
“सुपर्णसन्निभा भूमिरङ्गं कार्णं प्रतीयते ।
तत् पत्रवत्कं काकस्य सुपर्णस्तुपजायते ॥४९॥
तुवरीदलसङ्काशमङ्गं यस्मिन् प्रतीयते ।
तुवरीवत्कमाख्यातं तत्क्षते शिरसो भ्रमः ॥
एष खड्गाधमश्चाप्यो यदीच्छेज्जीवनं निजम् ॥
५० ॥
बिम्बीदलसमा भूमिरङ्गं बिम्बीफलोपमम् ॥
बिम्बीवत्कन्तु तद्विद्यात्तज्जलं तिक्तमुच्यते ।
पित्तश्लेष्मविकाराणां प्रशमाय प्रयुज्यते ॥५१॥
प्रियङ्गुसदृशञ्चाङ्गं भूमिश्च कपिलाकृतिः ।
फलवत्कमिदं प्रोक्तं घाती धूम्रं वमत्यपि ॥५२॥
अङ्गं सर्षपपुष्पाभं भूमिश्चैव सितासिता ।
एतत् सर्षपवत्कं स्यात् घाती वह्निं वमत्यपि ॥
अपि कुण्डलिकां याति एतदत्यन्तकोमलम् ।
एतत्प्रसादात् क्षितिपः कृत्स्नां साधयते महीम् ॥
५३ ॥
नीलीरससमा भूमिरङ्गं नीलीतरङ्गवत् ।
नीलीवत्कमिदं दृष्टं घाते वह्निशिखां वमेत् ॥
एष खड्गवरो नृणामरिष्टभयनाशनः ॥५४॥
रक्तास्तिस्रो महारेखा भूमिश्चैव सितासिता ॥
रक्ताङ्गमिति जानीयाद्वैरिपक्षविनाशनम् ।
घातेन यस्तु रक्तां वा नीलां वा वमते शिखाम् ॥
रक्तस्पर्शनमात्रेण स्वयमेव निकृन्तति ।
क्षतेऽस्य रक्तश्वयथुस्तृषा दाहश्च जायते ॥५५॥
अङ्गं वचादलसमं भूमिश्चैव सितासिता ।
वचावत्कमिदं ज्ञेयं तत्क्षताद्विषनाशनम् ॥
एष खड्गवरो राज्ञा साधनीयः प्रयत्नतः ॥५६॥
रसोनाद्युत्तमं ह्यङ्गं भूमिस्तस्य दलोपमा ॥
रसोनवत्कं जानीयात् घाते वह्निं वमत्यपि ।
अस्य धावनतोयेन आमवातविनाशनम् ॥५७॥
निरङ्गा निर्म्मला भूमिर्धारा तीक्ष्णा खरः खरः ।
सुमनावत्कमेतत् स्याद्भुवि नात्यन्तदुर्लभम् ॥५८॥
मञ्जिष्ठासदृशा दीर्घास्तिस्रो रेखाः सुविस्तराः ।
जिङ्गीवत्कमिदं नाम सर्व्वकामार्थसाधनम् ॥५९॥
अङ्गं शमीपत्रसमं भूमिर्धूम्रा सितासिता ।
शमीवत्कमिदं ज्ञेयं शनैश्चरमुदावहम् ॥
घातेषु वमते वह्निं सहते वह्निपीडनम् ॥६०॥
रोहितवल्कलसदृशमङ्गं भूमिः सितासितावापि ।
धूम्रा गभीरस्वरयुक्तं धारा तीक्ष्णा सिता
भवेन्नेत्रा ॥
रोहिताख्यमिदं वर्ण्यं सर्व्वारिकुलनाशनम् ।
वह्निसंस्पर्शमात्रेण छिन्दिच्छिन्धिमिति भाषते ।
इत्ययं दुर्लभः खड्गो देवानामपि लभ्यते ॥६१॥
शफरीवल्कलाकारमङ्गं भूमिः सितासिता ।
प्रोष्ठीवत्कमिदं प्रोक्तं यस्तं तरति वारिधिम् ॥
एष खड्गोत्तमो राज्ञां विपक्षकुलनाशकः ।
कदाचिल्लभ्यते भाग्यैर्लभ्यते लभते महीम् ॥६२॥
अङ्गं मारिषपत्राभं भूमिः श्यामाञ्जनच्छविः ।
इत्ययं मारिषाङ्गः स्यात् पृथिव्यां नातिदुर्लभः ॥
६३ ॥
भृङ्गराजस्य पुष्पाभमङ्गं भूमिर्द्युतिप्रभा ।
आघातं सहते नैव एष खड्गाधमो मतः ॥६४॥
धारा तीक्ष्णा क्षुराकारा भूमिरङ्गविवर्ज्जिता ।
आघातं सहते घोरं घाती वह्निं वमत्यपि ।
क्षुराङ्गमिति जानीयात् पृथिव्यां नातिदुर्ल-
भम् ॥६५॥
निर्म्मला समला भूमिर्भवेच्चैव कदा कदा ।
मन्दा तीव्रा भवेद्धारा लड्डिवत्कस्य लक्षणम् ॥६६॥
नीलाञ्जनसमा भूमिरङ्गं जलतरङ्गवत् ।
मेघाङ्गमिति जानीयाच्छायी शीतं भवत्यपि ॥
एष खड्गाधमश्चाप्यो यदीच्छेद्भूतिमात्मनः ।
भर्त्तुः प्रतापं शमयेद्दविविम्बं यथा घनः ॥६७॥
मन्दा धारा भृशं गाढा भूमिरङ्गविवर्ज्जिता ।
पर्व्वताङ्गमिदं नाम सर्व्वत्रैवोपलभ्यते ॥६८॥
अङ्गं गुञ्जाफलसमं भूमिर्म्मीनदलोपमा ।
गुञ्जावत्कमिदं एकं तत्र भवति वर्षेषु ॥
घाते सिन्दूरसङ्काशं रजो वमति चाद्भुतम् ।
एष खड्गवरो राज्ञा भाग्यादेवोपभुज्यते ॥
अस्य प्रभावात्तन्नास्ति यन्न साधयति नृपः ॥६९॥
अङ्गं तनुशराकारं भूमिश्चैव सितासिता ।
धारा तीक्ष्णा वमति च घाते वह्निसमाः
शिखाः ।
शरवत्कमिदं ज्ञेयं राज्ञां वाञ्छितसिद्धये ॥७०॥
दूर्व्वादलनिभा भूमिर्धारा तीक्ष्णा खरः खरः ।
घातेन वमते वह्निं दूर्व्वावत्कं सुदुर्लभम् ॥७१॥
अङ्गं विल्वदलाकारं भूमिश्चैव सितासिता ।
विल्ववत्कमिदं घाती नीलपीते वमेच्छिखे ॥
एष खड्गवरः प्रोक्तः शत्रूणां कुलनाशनः ॥७२॥
मरुवदलसङ्काशा भूमिरङ्गं मरुवत् ।
मरुवाङ्गमिदं घाती रजो वमति चाद्भुतम् ॥७३॥
शोणपुष्पनिभा रेखा दीर्घा भूमिः सितेतरा ।
शोणाङ्गमिति जानीयात् खड्गं परमदुर्ल-
भम् ॥७४॥
शटीदलसमा भूमिरङ्गं तत्कुसुमोपमम् ।
शटीवत्कमिदं प्रायो लभ्यते गुणवत्तरम् ॥७५॥
मार्ज्जाररोमसदृशमङ्गं भूमिः सितेतरा ।
मार्ज्जाराङ्गमिदं नाम्ना रोगशोकभयावहम् ।
एष खड्गाधमश्चाप्यो यदीच्छेद्भूतिमात्मनः ॥
७६ ॥
शीतलीपत्रसदृशमङ्गं यस्मिन् प्रतीयते ।

विद्यात् शितवर्णं तत् धारावक्रमनुत्तमम् ॥” ७७
लौहप्रदीपश्च ।
“अङ्गं मर्म्मावलुप्तिर्भं भूमिर्मौक्तिकच्छविः ।
घातेन वमति मुक्ता शिरा मौर्वी भवेत्ततः ॥
मौर्व्वाङ्गमिदमुत्कृष्टं यशःकीर्त्तिविवर्द्धनम् ॥७८॥
लिङ्गं तीक्ष्णं खरं गाढ़ं घाती मर्द्दयेत् क्षणम् ॥
छिन्नत्राण्यपि च लौहं यथाङ्गमिति तद्वदेत् ॥७९॥
कलायपुष्पसदृशमङ्गं भूमिः सितासिता ।
कलायवर्णं जानीयात् तत्फले पाके दृश्यते ॥८०॥
अङ्गं चम्पकपुष्पाभं भूमिः कृष्णा तथा सिता ।
शिरां घाती वमेच्छीतं सित्तं तस्य जलं भवेत् ।
इदं चम्पकवर्णं स्यात् सर्व्वत्र विजयप्रदम् ॥८१॥
अङ्गं पलाशपुष्पमं भूमिः शुक्ला तथेतरा ।
पलाशवर्णमिदं श्रेयं नानाभावं भवेद्रुतम् ॥
इत्ययं बालरोगाणां नाशने परमौषधम् ॥८२॥
अङ्गं पटोलीसमं भूमिर्म्मटरजच्छविः ।
पटवर्णमिदं ध्येयं खरं खड्गाधमं बुधैः ।
एतस्य स्पर्शमात्रेण नरो मुच्येत सम्पदा ॥८३॥
वंशनीलीसमा भूमिः खरधारा सितासिता ।
वंशाङ्गमिति जानीयाद्वंशवृद्धिकरं परम् ॥८४॥
भूमिः शालदलाकारा अङ्गं लघु सितासितम् ।
शालाङ्ग एव खड्गः स्यात् पूज्यः सर्व्वार्थदायकः ।
अयं घाती वमेद्वह्निं धारा चाप्यथवा भवेत् ॥८५॥
भूमिः सितासिता वापि अङ्गं ज्येष्ठीसमं लघु ।
ज्येष्ठीवर्णमिदं निन्द्यं न स्पृश्यं वा हितेच्छुभिः ॥
८६ ॥
पुरागजालसदृशमङ्गं भूमिः सितासिता ॥
जालवर्णमिदं पूज्यं शत्रुसम्पत्तिनाशनम् ।
यदि घाती वमेन्नीलां शिखां वह्निं वमेच्च वा ॥
तदैव दुर्लभः खड्गो नान्यथा भयहेतुकः ॥८७॥
अङ्गं पिपीलिकाकारं भूमिर्धूम्रा तथासिता ॥
पिपीलिकाङ्ग इत्येव तत्फले कष्टसम्भवः ।
स्वयं यदि भवेद्रुग्नः घाती पूज्यतमस्तदा ॥८८॥
नलपत्रसमा भूमिरङ्गन्तत्कुसुमोपमम् ।
नलाङ्गमिति जानीयाद्भर्त्तुः सर्व्वार्थसाधकः ॥
८९ ॥
निरङ्गा निर्म्मला भूमिर्वृहं दृष्टं वमेद्व्रणः ।
दृढ़ा धारा भृशं स्थूला आघातं सहते न च ॥
रजोवर्णमिदं निन्द्यं शत्रूणां विजयावहम् ॥९०॥
कुशाकवीजसदृशमङ्गं भूमिः सितासिता ॥
कुशाकवर्णं जानीयात्तत्फले वेगनिग्रहः ॥९१॥
अङ्गं दूरीमसदृशं भूमिर्धूम्रा सितासिता ।
रोमाङ्गमिति जानीयात्तत्फले पित्तकोपमः ॥९२॥
भूमिः कुहीरवसमा अङ्गं तत्कण्टकोपमम् ॥
धारा तीक्ष्णा रवक्लीष्णी लघुमानं खरा शुभा ।
शुधाङ्गः खड्ग इत्येव तत्फले दाहलङ्घमाः ॥
सुखाधिककर्णनाशानी दाहः मानश्च जायते ।
अयं यदि च सर्पाणां फणायुपरि विध्यते ॥
पश्चाद्विदारमाप्नोति सर्पो लोटयते शिरः ।
अस्य क्षालनतोयेन कुष्ठरोमविनाशनम् ॥९३॥
मार्कण्डुदलच्छाभा भूमिरङ्गञ्च तत्समम् ।
मार्कण्डवर्णं जानीयात्तत्फले दाहनाशनम् ॥
एष खड्गाधमस्त्याज्यो धेतव्या यदि सिद्धिः ॥
९४ ॥
रक्तं वकुलपुष्पाभं भूमिस्तत्फलसन्निभा ॥
वकुलाङ्गमिदं पूज्यं घाती सुरभिगन्धवत् ।
तस्मात् जगतीमध्ये यत्नेन न साध्यते ॥९५॥
अङ्गं संमिश्रितं यस्मिन् किञ्चिद्गन्धमीक्ष्यते ।
सर्व्वेषां दर्शने वापि तीक्ष्णधारः खरस्वरः ॥
एष काश्मिकवर्णः स्यादुत्पत्तादेवोपलभ्यते ।
नैनं प्राप्यापि वर्द्धन्ते शोभाश्चिन्तादयोऽपि च ॥
९६ ॥
भूमिः कृष्णा निरङ्गा चेद्धारा तीक्ष्णा दृढ़ापि च ।
आघातं सहते घोरं रक्तं स्पर्शेन यो विशेत् ॥
घातेन वह्निं वमति ध्रुवं वाप्यतिघर्षणात् ।
महिषाङ्गः स वै खड्गः पृथिव्यां नातिदुर्लभः ॥
९७ ॥
अत्यन्तनिर्म्मला भूमिः शरीरं प्रतिबिम्बितम् ।
धारा तीक्ष्णा स्वरक्लीष्णा स्वच्छाङ्गं तद्विनि-
र्द्दिशेत् ॥९८॥
तस्मिन् यदा भवेद्रेखा ऊर्द्ध्वा कल्याणकं तदा ॥९९॥
अस्मिन्नपि भवेद्वक्रा रेखा वक्राभिधन्तु तत् ॥१००॥
एतन्नितयमुद्दिष्टं खड्गानां प्रवरं बुधैः ।
प्रायशो लभ्यते लोके यदि सर्व्वगुणावहम् ॥
इतीदं निखिलं प्रोक्तं वर्णानां लक्षणं मया ।
प्रयत्नैर्लिखितं यत्नं सर्व्वेषां हितकाम्यया ॥
इतः परन्तु लौहानां लक्षणं यत्र लक्ष्यते ।
तस्य दासो भवाम्येव प्रतिज्ञेति कृता मया ॥
द्विलिङ्गमिश्रमालोक्य मिश्राङ्गमिति निर्द्दिशेत् ।
सर्व्वेषामङ्गमालोक्य सर्व्वाङ्गमिति निर्द्दिशेत् ॥”
इति खड्गपरीक्षायामङ्गाध्यायो द्वितीयः ॥ * ॥
खड्गस्य रूपाणि यथा,—.
“नीलोत्पलायकुसुमच्छविरञ्जनाभा
या चन्द्रनीलमणिकाचमणिप्रभा च ।
भूमिश्च या मरकतप्रतिमावभासा
खड्गस्य नीलमिति रूपमिदं वदन्ति ॥
तत्र चेन्निन्दितान्यङ्गान्यरिष्टानि बहून्यपि ।
दृश्यन्ते बहुदोषापि तथापि गुणवत्तरम् ॥१॥
या कालकाम्बुदमसीरसकालसर्प-
शङ्काम्धकारकचभारसमा विभाति ।
भूमिश्च या भ्रमरवन्धुसमावभासा
खड्गस्य कृष्णमिति रूपमिदं वदन्ति ॥
अत्र नैवाणि सम्पत्तौ अरिष्टान्यशुभानि च ।
साधारणमिदं रूपं प्राह नागार्ज्जुनो मुनिः ॥२॥
या प्रावृषेण्यनवभेकसमानवर्णा
गोमेदरत्नसदृशापि च यस्य भूमिः ।
खड्गस्य पिङ्गमिति रूपमिदं वदन्ति
भर्त्तुर्य्यशोबलधनच्चयकारणाय ॥३॥
या मन्दधूमसदृशा च शिरीषपुष्प-
तुल्या विभाति मलिनापि च खड्गभूमिः ।
नागार्ज्जुनो वदति धूम्रमिदं हि रूपं
भर्त्तुर्य्यशोबलधनावलिवर्द्धनाय ॥४॥
द्विरूपं मिश्रितं कृत्वा शङ्करं प्रवदेद्बुधः ।
त्रिभी रूपैः समेतन्तु खड्गं त्रिपुरवाङ्कितम् ॥
रूपैश्चतुर्भिः संयुक्तं चतुरं खड्गमुत्तमम् ॥”
इति लौहार्णवस्य खड्गपरीक्षायां वर्णाध्यायस्तृतीयः ॥ * ॥
“जातिश्चतुर्व्विधा प्रोक्ता खड्गानां या पुरा मया ।
सम्प्रत्यपि प्रयत्नेन तासां लक्षणमुच्यते ॥
शुद्धाङ्गः शुद्धवर्णश्च सुनेत्रः सुस्वरश्च यः ।
मृदुस्पर्शः सुसन्धेयस्तीक्ष्णधारो महागुणः ॥
खड्गं ब्राह्मणजातिं तं प्राह नागार्ज्जुनो मुनिः ।
अस्य घाते भवेच्छोथो घोरः सर्व्वाङ्गगोचरः ॥
मूर्च्छा पिपासा दाहश्च ज्वरो मृत्युश्च जायते ।
अदृष्टं त्रिफलाकल्कमर्द्दराजिन्द्रियोषितम् ।
मलिनत्वं न सम्भत्ते निर्म्मलं कुरुते परम् ।
तरुणादित्यकिरणस्पर्शादिव हवी स्थितः ॥
दहेत् सर्व्वं न तु क्षारं पुरुषस्य हि धारिणः ।
नायसुग्रधारमात्रेण खरतां व्रजति स्फुटम् ॥
एष खड्गवरः सर्व्वमरिष्टं नाशयेद्ध्रुवम् ।
अस्य प्रसादात् पुरुषस्त्रिलोकमपि साधयेत् ॥
तस्मादेव मनुष्याणां सुलभो न हि भूतले ।
दृश्यन्ते प्रायशः स्वर्गे कुशद्वीपे हिमालये ॥१॥
धूम्रवर्णं महासारं तीक्ष्णधारं खरस्वरम् ।
सर्व्वाघातसहं सर्व्वनेत्रवर्णस्वराकरम् ॥
खड्गं क्षत्रियजातिं तं जानीयात् खड्गकोविदः ।
अस्य घाते भवेद्दाहस्तृष्णानाशो ज्वरो भ्रमः ॥
मृत्युश्च जायते घाती वमेद्वह्निकणान् बहून् ।
संस्कारे चाप्यसंस्कारे नैर्म्मल्यं तस्य लक्ष्यते ॥
घातेऽप्यघाते खरता महत्त्वं चात्यन्ततीक्ष्णता ।
रक्तस्पर्शनमात्रेण विशेदन्तरमन्तरम् ॥
अयं खड्गवरः पूज्यो मनुष्यैरपि लभ्यते ॥२॥
नीलवर्णः कृष्णवर्णः संस्कारे निर्म्मलो भवेत् ॥
घातेन खरता चास्य घाततुल्यं निकृन्तति ।
वैश्यजातिरयं खड्गः घाते त्वङ्मात्रदर्शनम् ॥
नात्युत्कृष्टो नातिहीनः सर्व्वत्रैवोपलभ्यते ॥३॥
सजलाम्भोदसङ्काशः स्थूलधारो मृदुस्वरः ॥
संस्कारे चैव मलिनः घाती चापि खरेतरः ।
शूद्रजातिरयं खड्गः घाते नाल्पापि वेदना ॥
दूरादेषोऽधमस्त्याज्यो यदीच्छेद्धितमात्मनः ।
प्रायशः सर्व्वलोकेषु स्वयमेवोपदृश्यते ॥४॥
द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत् ।
त्रयाणां लक्षणेनैव त्रिजातिं खड्गमादिशेत् ।
चतुर्णां लक्षणेनैव जातिसङ्करमुच्यते ॥”
इति लौहार्णवस्य खड्गपरीक्षायां जात्यध्यायः ॥ * ॥
अथ त्रिंशन्नेत्राणां लक्षणानि ।
“चक्राकारं यदा नेत्रं खड्गस्याङ्गे प्रदृश्यते ।
तं चक्रनेत्रं जानीयात् भर्त्तुः सर्व्वार्थसाधनम् ॥
अनेनैकेन खड्गेन कृत्स्नां साधयते महीम् ॥१॥
प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम् ॥
यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत् ।
अयं खड्गवरो यत्र तत्रैव कमलालया ॥२॥
ऊर्द्ध्वा स्थूला यदा रेखा गदाकारा प्रतीयते ।
गदानेत्रमिदं विद्धि सर्व्वशत्रुनिषूदनम् ॥३॥
शङ्खाकारं यदा नेत्रं खड्गमध्येऽभिदृश्यते ।

ग्रहनेत्रमिदं सर्व्वदेवानामपि दुर्लभम् ॥४॥
छत्रप्रतिमं नेत्रं यस्य भूमौ प्रतीयते ।
सर्व्वार्थसाधकं खड्गं तं विद्याद्विजयप्रदम् ॥५॥
धनुःस्वरूपं यन्नेत्रं धनुर्नेत्रमुदन्ति तम् ।
तस्य स्पर्शनमात्रेण सन्त्रोऽपि प्रसन्नायते ॥
अयं निग्रीये विजने खड्गो भानभानायते ॥६॥
यन्नेत्रमङ्कुशाकारं तद्विद्यादङ्कुशाकरम् ॥
खड्गमङ्कुशनेत्राख्यं भर्त्तुः सर्व्वार्थसाधकम् ।
अलक्ष्मीपापरक्षोघ्नं सन्तापदुःखनिवारकम् ॥७॥
छत्राकारं यदा नेत्रं छत्रनेत्रं वदन्ति तम् ।
अस्य प्रभावात् चीणोऽपि सार्व्वभौमो भवेन्नृपः॥
दीनोऽपि च सुखी भूयात् सुखी भूयान्महेश्वरः।
महेश्वरोऽपि सचिवः सचिवो मण्डलेश्वरः ॥
मण्डलेशश्चक्रवर्त्ती भवेदत्र न संशयः ॥८॥
पताकाकृतिनेत्रश्चेत् सर्व्वसम्पत्तिकारकम् ॥
पताकानेत्रमाख्यातं संग्रामे विजयप्रदम् ॥९॥
नेत्रं वीणाकृति यदा वीणानेत्रमुदन्ति तम् ।
निग्रीये विजने खड्गो वीणावत् स्वनमावहेत् ।
अस्य प्रभावात् सर्व्वेशा अपि वश्या भवन्ति
हि ॥१०॥
मत्स्याकृति यदा नेत्रं मत्स्यनेत्रमिमं विदुः।
अस्य प्रभावात् चितिपः शत्रुर्न्वा साधयते
महीम् ॥११॥
श्रीवत्सलिङ्गसमं नेत्रं लिङ्गनेत्रमिमं विदुः।
भर्त्तुः सर्व्वार्थसंसिद्ध्यै शत्रूणां नाशनाय च ॥
वामपार्श्वे तु याचायां धर्त्तव्योऽयं तथा रणे॥१२॥
अत्र अत्राद्वैचन्द्रकलसानां लक्षणानि पति-
तानि । १३ । १४ । १५ ।
शूलाकृति यदा नेत्रं शूलनेत्रं वदन्ति तम् ।
सर्व्वार्थसाधकः सर्व्वारिष्टाभिप्रणाशनः ॥१६॥
शार्दूलनेत्रं तं विद्यात् शार्दूलाकृतिनेत्रतः।
शत्रुश्रेणीविनाशाय संग्रामे विजयाय च ॥१७॥
सिंहाकृति यदा नेत्रं सिंहनेत्रमिमं विदुः।
अस्य प्रभावात् चीणोऽपि शत्रुर्न्वा साधयते
महीम् ॥१८॥
तत् सिंहासननेत्रं स्यात् नेत्रे सिंहासनोपमे।
अस्य प्रभावात् चितिपः शत्रुर्न्वा साधयते
महीम् ॥१९॥
गजाकृति यदा नेत्रं गजनेत्रं वदन्ति तम् ॥
अस्य प्रभावात् चीणोऽपि लभते राजसम्पदम् ॥
२० ॥
नेत्रं हंसाकृति यदा हंसनेत्रं वदन्ति तम् ।
अस्य प्रभावात् भूपालो यशःप्राप्नोत्यनुत्तमम् ॥
२१ ॥
मयूराकृतिनेत्रं यत् तन्नेत्रमिति निर्द्दिशेत् ॥
अस्य प्रभावात्तनुजः सर्पदर्पान्निवर्त्तयेत् ॥२२॥
जिह्वाकारं यदा नेत्रं जिह्वानेत्रं वदन्ति च ॥
संग्रामसर्पदर्पेष्वेवं पिवेद्वैरिशिरोरणः ॥२३॥
दन्ताकारं यदा नेत्रं दन्तनेत्रं वदन्ति तम् ॥
अयं रिपुगणं हन्ति सर्व्वं प्रकृतिभैरवम् ॥२४॥
खड्गाकारं यदा नेत्रं खड्गनेत्रं वदन्ति तम् ।
तस्य प्रभावात्तनुजस्त्रिलोकीं वशयेदपि ॥२५॥

तरवा

मनुष्यपुत्रिकाकारा पुत्रिकानेत्रमुच्यते ॥
अयं खड्गो वह्नीयां शत्रुर्न्वा साधयेत् चितिम् ।
न चेयं पुत्रिका किन्तु जयलक्ष्मीरियं स्वयम् ॥
तस्मान्नायं मनुष्याणामल्पभाग्येन लभ्यते ॥२६॥
चामराकृतिनेत्रत्वात्तन्नेत्रमिति निर्द्दिशेत् ।
अस्य प्रभावाच्छायन्ते चामरीकृतसम्पदः ॥२७॥
एकानेकशिखे शैलनेत्रे तन्नेत्रसंज्ञकम् ।
अपि राष्ट्रभये युद्धे विषमे वैरिसङ्कटे ।
स्थिरीकरोति धरणीं धरणीं पर्व्वतो यथा ॥२८॥
पुष्पमालासमं नेत्रं पुष्पनेत्रं वदन्ति तम् ।
अस्य प्रभावात्तुष्यन्ति यक्षाः सर्व्वाश्च देवताः ॥
२९ ॥
भुजङ्गसदृशे नेत्रे सर्पनेत्रमिदं मतम् ।
अयं शत्रुगणं हन्ति यथा मर्त्यं भुजङ्गमः॥३०॥
सवर्णं समवर्णञ्च तत् सर्व्वं द्विविधं भवेत् ।
सवर्णं शान्तिसम्पत्त्यै रिपुनाशे तथापरम् ॥
द्वयोरेकत्र एके च तत् पुनर्व्विविधं भवेत् ।
एकलोकसुखं नेदं ददाति द्विविधं द्वयोः ॥
मूलमध्याग्रसंस्थानात् पुनस्त्रिविधं भवेत् ।
अग्रे चाग्रफलं श्रेयं मध्ये मध्यफलं मतम् ॥
मूले फलं जघन्यं स्यात् प्राह नागार्ज्जुनो मुनिः।
एकं द्वे त्रीणि नेत्राणि नात्र संख्या व्यतिक्रमः ॥
एकं धर्म्मः स्वर्गकामौ द्वे त्रीणि च त्रिवर्गकम् ।
तत्फलानि प्रयच्छन्ति प्राह नागार्ज्जुनो मुनिः ॥
द्विनेत्रमिति जानीयात् स्वसंज्ञा नेत्रयोर्द्वयोः ।
त्रिनेत्रञ्च त्रिभिर्ज्ञेयं बहुनेत्रमतः परम् ॥
यथोत्तरं गुणवद्धं खड्गमाहुरनुत्तमम् ।
दिव्यास्त्रमिति निर्द्दिष्टं नेत्राणां शुभदायिनाम्॥
तीर्थानां मङ्गलानाञ्च दर्शनञ्च शुभावहम् ॥"
इति खड्गपरीक्षायां नेत्राध्यायः पञ्चमः ॥५॥
"यथा नेत्रस्य संस्थानं तथारिष्टस्य लक्षयेत् ।
नेत्रेषु स्थाननियमो नारिष्टे स्थाननिर्णयः ॥
प्रशस्ताङ्गोऽपि यः खड्गोऽरिष्टेनैकेन
निन्दितः ॥"
अथ छिद्रादरिष्टानां लक्षणानि ॥
"छिद्रवद्दृश्यते खड्गे स्वभावेन च लक्ष्यते ।
छिद्रारिष्टमिदं विद्धि भर्त्तुर्व्वीर्य्यबलापहम् ॥१॥
यदा काकपदाकारमरिष्टं दृश्यते क्वचित् ।
अयं काकपदारिष्टः सर्व्वाभीष्टविनाशनः ॥२॥
रेखाकारं यदारिष्टमूर्द्ध्वं वा तिर्य्यगेव वा ।
रेखारिष्टमिदं विद्धि भर्त्तुर्व्वीर्य्यबलापहम् ॥३॥
भिन्नभाण्डिकरं पार्श्वं भिन्नारिष्टमिदं विदुः ।
भर्त्तुः कुलं यशो राष्ट्रं नाशयेत् न प्रणेत्
स्वयम् ॥४॥
यदा भेकशिरोरूपमरिष्टं दृश्यते क्वचित् ।
भेकारिष्टमिदं नाम्ना संग्रामे भयदायकम् ५ ॥
अरिष्टे सूचिकाकारे सूचिकारिष्टमुच्यते ।
अयं खड्गाधमः कुर्य्यात् पशुः पातालखड्ग-
मम् ॥६॥
विडालनयनाकारो विन्दुरेकोऽतिविस्तरः ।
विडालारिष्टमेतत् स्यात् भर्त्तुः सर्व्वार्थनाश-
नम् ॥७॥

तरवा

अरिष्टं शर्कराकारं यदा खड्गे प्रदृश्यते ।
शर्करारिष्टमेतत् स्यात् सद्बुद्धिविनाशकम् ॥८॥
यदा नीलीदलाभासमरिष्टं दृश्यते क्वचित् ।
नील्यरिष्टमिदं श्रेयं यशोलक्ष्मीविनाशनम् ॥९॥
अरिष्टे मधुकाकारे मधुकारिष्टमुच्यते ।
भर्त्तुः कुलं यशो बुद्धिं धृतिं प्रीतिञ्च नाशयेत् ॥
१० ॥
भृङ्गमाप्रतिमो विन्दुरेकोऽनेकोऽथवा यदा ।
भृङ्गमारिष्ट एवैष धृतिलक्ष्मीविनाशनः ॥११॥
कपीरूपमरिष्टञ्चेदूर्द्ध्वं वा तिर्य्यगेव वा ।
कप्यरिष्टमिदं नाम भर्त्तुः कुलविनाशनम् ॥१२॥
अयश्चेच्छिन्नको राजन् ! यद्धतो विषमेव वा ।
उपर्य्युपरि याचोऽर्धविन्दाख्यमरिष्टकम् ॥
तस्य स्पर्शनमात्रेण सचिवः कामनामाचरेत् ॥१३॥
काकिकारिष्टमित्येतद् श्रीधृतिलक्ष्मीनाशनम् ॥
१४ ॥
एकत्र यदि न स्थेयं प्रयत्नेनापि संवृतः।
दारी नाम महारिष्टं सर्व्वाभीष्टविनाशनम्॥
अनेकशुभसम्पन्नः खड्गो लोकेषु दृश्यते ॥१५॥
कपोतपत्रप्रतिममरिष्टञ्चेत्तदाख्यकम् ।
भर्त्तुः कुलं यशो विद्यां बलं बुद्धिञ्च नाशयेत् ॥१६॥
काकाकृति यदारिष्टं काकारिष्टं तदोच्यते ।
अनेन भर्त्तुः संग्रामे भङ्गः पदोपजायते ॥१७॥
अरिष्टे खर्परकारे खर्परारिष्टमुच्यते ।
भर्त्तुर्यशो बलं वीर्य्यं बुद्धिं प्रीतिञ्च नाशयेत् ॥१८॥
यदाप्यल्लोऽघ्रकलं जयं स्यादिव लक्ष्यते ।
शङ्कलीति स वै खड्गः सर्व्वाभीष्टनिकृन्तनः॥१९॥
क्रोडीकृतपत्रकयोर्लक्ष्मी पतिति २० । २१ ।
यस्मिन्नित्यमिवाभाति मध्ये वा दृश्यते क्वचित्।
जालारिष्टमिदं नाम भर्त्तुः कुलक्षयापहम्॥२२॥
एकैकरेखा दीर्घाग्रा यदा पञ्चविनी भवेत् ।
सर्व्वे चाथ करेखाथ करालारिष्टमुच्यते ॥
अयं हि चितिपालानां दृष्टियोग्यो भवेन्न हि ।
दर्शनादेव नश्यन्ति यशोलक्ष्मीजयादयः ॥२३॥
अरिष्टे कङ्कपत्राभे कङ्कारिष्टं तदुच्यते ।
अस्य स्पर्शनमात्रेण नश्यत्यायुर्यशो बलम् ॥२४॥
खर्ज्जूरपत्रप्रतिमं यदारिष्टन्तु लक्ष्यते ।
खर्ज्जूरारिष्टमेतत् स्याद्भर्त्तुः कुलधनापहम् ॥२५॥
गोधाङ्गाभमरिष्टञ्चेत् गोधारिष्टं तदुच्यते ।
अनेन भर्त्तुर्नश्यन्ति लक्ष्मीबलकुलादयः ॥२६॥
गोपुच्छाकृति चेत् खड्गे अरिष्टं संप्रतीयते ।
पुच्छारिष्टमिदं नाम भर्त्तुः सर्व्वार्थनाशनम्॥२७॥
खनित्राभमरिष्टञ्चेत् खनित्रारिष्टमुच्यते ।
सुराणामपि संग्रामे भङ्गमेतत् प्रयच्छति ॥२८॥
अरिष्टे लाङ्गलाकारे लाङ्गलारिष्टमुच्यते ।
अयं पापात् पापतरः प्रेक्षणीयो न भूभुजा ॥
अयमायुः श्रियं हन्ति विद्यां बलमसंशयः॥२९॥
वक्राग्रारिष्टस्य लक्षणं पतितम् ॥३०॥
इत्यरिष्टानि प्रोक्तानि नागार्ज्जुनात् प्रयत्नतः।
विचार्य्यैतानि मतिमान् खड्गं कोषे निधापयेत्॥
दिव्यमाल्यमित्यादिदिव्यमरिष्टानां छिन्नाशनाम् ।
अमङ्गलानां मन्दानां दर्शनञ्चाशुभावहम् ॥

